Vol. LVII
No. 4—8
५७तम-वर्षस्य
४र्थ—८म-संख्याः




August to
December 1974
श्रावणभाद्राश्विनकार्त्तिक-
मार्गशीर्षाणां
१८९६ शकीयानां

१३८१ वङ्गाब्दीयानां

# संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

श्रीइन्द्रमोहन चक्रवर्त्ती .20.8.75

[Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta]

सम्पादकः

अध्यापक-श्रीरामधनशास्त्री

सह-सम्पादकौ

अध्यापकः श्रीदीननाथ त्रिपाठी नवतीर्थः, महाचार्यः

अध्यापकः श्रीरवीन्द्रकुमार सिद्धान्तशास्त्री पञ्चतीर्थः
एम. ए., पि. आर. एस. च

## सूची



वार्षिकमूल्यम्—रूप्यकद्वादशकम्

## SANSKRIT SAHITYA PARISAT SERIES

1. **Kapalkundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 3

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushana. Re. 3 ; (Out of stock).

3. **Sankari-sangitam of Jaynarayana**—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock). Re. 3

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by M. M. Kalipada Tarkacharya. (Out of stock). Rs. 8

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 5 ; Rs. 4 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 5 (Out of stock).

7. **Durgotsava-vivekah of Shulapani**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 3 ; 2 (for members).

8. **Karakollasah of Bharata Mallika**—Edited by Pt. Janakinath Sahityashastri. Rs. 3

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Rs. 3 (Out of stock).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya —Edited by Pt. Satish Chandra Siddhantabhushana. Rs. 3 ; Rs. 2 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 5 ; Rs. 4 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. Rs. 3 ; 2 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edied by Prof. Chintaharana Chakravarti, M.A. Rs. 4 ; Rs. 3 (for members).

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥

# संस्कृत साहित्य परिषत्

| Vol. LVII<br>Nos. 4-8 | १८९४ शकीयश्रावणभाद्राश्विन-<br>कार्त्तिकमार्गशीर्षाणां<br>१३८१ बङ्गाब्दीयानां<br>५७तम-वर्षस्य ४र्थ-८म-संख्याः | August to<br>December<br>1974 |
| --- | --- | --- |

## अस्तमितः प्रबोधचन्द्रः

[ निबन्धकः—प्रताप वन्द्योपाध्यायः ]

"अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥"

आदिष्टोऽस्मि संस्कृतसाहित्यपरिषत्सदस्यैर्दैवभूयं गतानां लाहिडी-कुलावतंसानां प्रबोधचन्द्रमहाभागानां जीवनालेख्यसमालेखनाय परिषत्-पत्रिकार्थम्। परन्तु स्मर्यते कविकालिदासवचनम्—'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिरि'ति। जीवतो गुणा न लक्ष्यन्ते, लोकान्तरितस्य तु सर्वथाऽसन्तोऽपि सुहृदां मनोमुकुरे प्रतिफलन्तीति लोकप्रकृतिसुलभमिदम्। अतो लोकान्तरितानां लाहिडीमहाभागानां जीवनालेख्यं निरपेक्षदृष्टिना मया यथायथमालेखितुं कथं शक्यमिति स्वाभाविकोऽयं संशयोऽन्येषाम्। तथा-प्यात्मप्रत्ययमुपजीव्य कथञ्चिद् विधीयते गङ्गोदकेनेव गङ्गापूजा।

१९०१ संवत्सरीयडिसेम्बरमासस्य षड्विंशे दिवसे पूर्ववङ्गस्य ( अधुनातनस्य वांलादेशस्य ) पावनामण्डले पितुर्मातुलालये गिरिवालादेव्या गर्भतः प्रवोधचन्द्रो जन्मालभत। तदीयः पितृदेवः स्वर्गतोऽभिलाषचन्द्र-सार्वभौमो राजसाहीनगरे स्वकीयचतुष्पाठ्यां विविधानि शास्त्राण्यध्यापयन्नासीत्। 'प्रवर्तितो दीप इव प्रदीपात्' सरस्वतीसाधनाव्रतं प्रवोधचन्द्रेण पितुरेवाधिकारसूत्रेणाधिगतम्। प्रबोधचन्द्रस्य कनीयसो भ्रातुः प्रकाशचन्द्रमहाभागस्य गवेषणाग्रन्थस्य (Concepts of Riti and Guna in Sanskriti Poetics in their Historical Development इत्याख्यस्य ) समर्पणपत्रे पितृदेवमुद्दिश्याभिहितम्—

स्वसुखनिरभिलाषः सुप्रबोधप्रकाशः<br>
प्रथितविविधविद्यासर्वभूमीश्वरस्त्वम्।<br>
मृदुरतिजितकाशी तात जाताहताशी-<br>
रविदितकृतिशेषः कीर्त्तिशेषं गतोऽसि ॥

इति। इदानीमस्माभिः प्रवोधचन्द्रमुद्दिश्याप्येतदेव पुनर्वक्तुं शक्यते। बाल्ये पितुरेव सकाशात् तस्य वेदव्याकरणादिषु संस्कृतविद्यासु जातोऽभिनिवेशः। प्रवेशिकापरीक्षाया मासद्वयमात्रात् पूर्वं पितरि दिवं प्रयाते कठोरदारिद्र्याभिधातेन प्रारब्धस्तस्य संग्रामः। परन्तु 'दारिद्र्यदोषो गुणराशिनाशी'ति कविवचनं तेन निरर्थीकृतमेव। १९१९ संवत्सरे आवश्यिकैच्छिकसंस्कृतयोस्तथेतिहासे letter मानं लब्ध्वासौ प्रथमश्रेण्यां प्रवेशिकापरीक्षामुत्तीर्णः। अथ आइ० ए० श्रेण्यामध्ययनार्थं राजसाहीमहाविद्यालयं प्रविष्टः। तत्रापि १९२१ संवत्सरे संस्कृते letter मानं लब्ध्वा प्रथमश्रेण्यामुत्तीर्णः। अथ साम्मानिकसंस्कृतेन वि० ए० श्रेण्यामध्ययनार्थं कलिकाता-संस्कृत-महाविद्यालयं प्रविष्टः। १९२३ संवत्सरे वि० ए० परीक्षायां साम्मानिकविषये प्रथमश्रेण्यामुत्तीर्णोऽप्येकस्मिन् पत्रे दैवात् ४७-संख्यामात्राधिगमात् कृतकार्येषु तदीयं सप्तमं स्थानमासीत्।

संस्कृतमहाविद्यालयस्य तदानीन्तना अध्यक्षपादा आशुतोषशास्त्रिमहाभागास्तं ढाका-विश्वविद्यालयस्य तदानीन्तनवङ्गसंस्कृतविभागाध्यक्षाणां प्रथितयशसां महामहोपाध्यायानां हरप्रसादशास्त्रि-महाभागानां करे न्यस्तवन्तः। तत्र १६२५ संवत्सरेऽसौ संस्कृतादिसदृशविषयवर्गे (Sanskritic Studies) एम० ए० परीक्षां प्रथमश्रेण्योत्तीर्णः प्रथमस्थानमधिष्ठाय तत्काल एव ढाका-विश्वविद्यालये संस्कृतस्य सहकार्यध्यापकपदे (Assistant Lecturer) वृतोऽभवत्। अस्मिन् कालेऽसौ सुबन्धुविरचितं प्रसिद्धं गद्यकाव्यग्रन्थं वासवदत्ताख्यं जगद्धरटीकासनाथं टीकाद्वयान्तरोद्धृतिसमेतं सम्पादितवान्। किन्तु प्रकाशनात् पूर्वमेवास्य का गतिर्जातेति न ज्ञायतेऽस्माभिः। १६३० संवत्सरेऽसौ वङ्गीयसर्वकारतो राष्ट्रियवृत्तिमासाद्य ईंलाण्डदेशं गतः। तत्र लण्डन् विश्वविद्यालये प्राच्यविद्यानिकेतने (School of Oriental Studies) इत्याख्ये—इदानीं यत् Oriental and African Studies इत्युच्यते) विश्रुतकीर्त्तीनां भाषातत्त्वविदामध्यापकानाम् R. L. Turner महोदयानामध्यक्षतायां वैदिकलौकिक-संस्कृतादिवाचां वाक्यसंघटनप्रकार-विषये (The Word-order of Sanskrit and its Later Indo-Aryan Forms) मौलिकीं गवेषणां विधाय १६३२ संवत्सरे पि० एइच्० डि० मानं लब्धवान्। इत ऊर्ध्वं पाणिनीयशब्दानुशासने गवेषणाकार्यार्थं शर्मरायदेशस्य (Deutschland) Breslan नगरं गतः। तत्राध्यापक-Bruo Liefich-महोदयानां सान्निध्येन मासत्रयं परिश्रम्य Kielhorn-सम्पादितं वैयाकरण-महाभाष्यमनुसृत्य Concordance Pāṇini-Patañjali (Mahābhāṣya) इत्यभिधेयो यो ग्रन्थोऽनेन विरचितः, सोऽधुनापि पाणिनीयशास्त्राम्भोधिरसज्ञानाममूल्यं पाथेयमिति प्रशस्यते। ग्रन्थोऽयम् Indiche Forschungen इत्याख्य-सुप्रसिद्धग्रन्थमालाया दशमग्रन्थरूपेण ब्रेसलाउनगरतः १६३५ संवत्सरे प्रकाशमापन्नः।

प्राच्यधारामवलम्ब्याप्यधीतविद्यः प्रबोधचन्द्रो वङ्गीयसंस्कृतसमितेः

काव्यतीर्थ इति तथा पूर्ववङ्गीयसारस्वतसमाजतः साहित्यशास्त्रीत्युपाधिं लब्धवान्। व्याकरणे सामवेदे चाद्यमध्यपरीक्षे अपि प्रथमश्रेण्यामसावुत्तीर्णः।

इत्थं प्राच्यप्रतीच्योभयधारोदितप्रबोधः प्रबोधः १६३२ संवत्सरे मातृभूमिं प्रत्यावृत्य पुनर्ढाकाविश्वविद्यालयेऽध्यापनाकार्यं (Lecturer)-रूपेणारब्धवान्। १६४७ संवत्सरे तत्रभवत्सु सुशीलकुमारदेमहाभागेषु ढाकाविश्वविद्यालयस्य संस्कृतविभागस्याध्यक्षपदत्तो गृहीतावसरेषु प्रबोधचन्द्रलाहिड़ीमहाभागास्तत्र Reader-रूपेणाध्यक्षपदमलमकुर्वन्। कदाचित् (१६४८-४६) इमे पूर्ववङ्गीयसंस्कृतसमितेः सचिवपदमधिष्ठिता आसन्। कदाचित् (१६४४-४६) ढाकाविश्वविद्यालयस्य जगन्नाथहल् इत्याख्यच्छात्रावासस्यावासिकशिक्षकरूपेणाध्यक्षरूपेण च नियुक्ता आसन्। १६४६ संवत्सरे ढाकाविश्वविद्यालयपदं परित्यज्य कलिकातायां प्रेसिडेन्सीमहाविद्यालयस्य संस्कृतविभागीय-प्रधानाध्यापकपदमलमकुर्वन्। परस्मिन् वर्षेऽस्य महाविद्यालयस्य संस्कृत-महाविद्यालयेन सह युग्मशिक्षाव्यवस्थायां जातायां प्रबोधचन्द्रपादैः संस्कृतमहाविद्यालयस्य संस्कृतविभागीयप्रधानाध्यापकपदम्, १६५४ संवत्सरे डिसेम्बरमासे च महाविद्यालयस्याध्यक्षपदमारूढम्।

एवं 'योऽधीत्याध्ययनालयेऽत्र कृतधीरस्यैव जातः प्रभुः' सोऽसौ प्रबोधचन्द्रलाहिड़ीमहाभागोऽस्माभिरस्य महाविद्यालयस्याध्यक्षरूपेणैव प्रथमं साक्षात् परिचितः। शिक्षाप्रतिष्ठानमूर्धन्यानां पञ्च गुणा अत्यावश्यिका भवन्ति। ते यथा विद्यावत्ता सत्यनिष्ठा कर्मोद्योगो व्यवहारिकसौजन्यं छात्रवात्सल्यञ्चेति। प्रायस्तावन्मूर्धन्येष्वेषां गुणानां कस्याप्यभावो दृश्यते। लाहिड़ीमहाभागास्त्वेतद्गुणसामग्र्या सर्वथा पूर्णा अभूवन्। तदीयाध्यक्षतायां संस्कृतमहाविद्यायतने बहुविधानां संघटनकार्याणामुद्योगः परिलक्षितोऽभूत्। यद्यप्यस्य महाविद्यालयस्य सुवर्णयुगं तदीयाध्यक्षतावसान

एव प्रारब्धं तथापि तस्य कियती सूचना तदीयशासन एव पर्यलक्ष्यत। तैः ग्रन्थागारस्य संस्कारो विहितः। महाविद्यालये वार्षिकपुनर्मेलनोत्सवः प्रवर्तितः। छात्राध्यापकानामखिलकर्मसु सततमासीत्तेषामुत्साहसन्दोहः। संस्कृतमहाविद्यालयस्याध्यक्षताकाले एवेमे संस्कृतसाहित्यपरिषद उपसभापति-पदे सादरं वृता वर्षचतुष्टयं ( वं १३६१-६५ ) च तत्पदमधिष्ठिताः।

वर्षद्वयमध्यक्षताया अनन्तरमिमे कलिकाता-विश्वविद्यालयस्य सुरवाणी-विभागेऽध्यापकपदे वृताः। तत्र तु १९५० संवत्सरे एवेमे साम्मानिका-सार्वकालिकाध्यापक (Hon. Part-time Lecturer)-रूपेण प्राध्यापयन्ति स्म। अध्यापनकार्ये पाटवमेषामत्रैवास्माभिः साक्षादवगतम्। अथ १९६२ संवत्सरे शान्तिनिकेतने विश्वभारतीविश्वविद्यालयस्य संस्कृत-पालिप्राकृतविभागस्याध्यक्षपदाय समाहूता इमे तत्र वर्षचतुष्टयं विद्यमाना अनन्तरं १९६७ संवत्सरे यादवपुरविश्वविद्यालये संस्कृतविभागेऽध्यापनार्थं वृताः। वर्षचतुष्टयादनन्तरं ततो गृहीतावसराः कर्मजीवनं समाप्यापि हृदयेन तत्र तत्र शिक्षाप्रतिष्ठाने रज्यमाना वस्तुगत्या त्वध्यापनकर्मतो दूरं क्षिप्ता अनवरतं खेदमनुभवन्तः कालमतिवाहयन्ति स्म। निरन्तरछात्र-सङ्गामोदिनो बहुभिर्निःस्वार्थान्तेवासिभिरनुदिनं सेव्यमाना इमे १९७४ संवत्सरे मे-मासस्य नवमेऽहनि ( कविगुरुरवीन्द्रनाथजन्मदिवसे ) अपराह्णे देवभूयं गताः।

विद्याविनयसम्पन्ने लाहिड़ीमहाभागे लोकान्तरं प्रस्थितेऽस्मद्देशस्य शिक्षालोकनभोमण्डलान्नूनमुज्ज्वलमेकं ज्योतिष्कं स्खलितम्। न केवलं संस्कृतविद्यास्वपि तु पालिप्राकृतभाषासाहित्ययोरपि पाण्डित्यं तत्रभवता बाल्यात्प्रभृति साधनयार्जितम्। वैदुष्येण ख्यातिं ततोऽप्यधिकतरां यद्यपि नैके समासादितवन्तस्तथापि तदीयपाण्डित्यस्य विशिष्टा काचन धारा गुण-ज्ञानां दृष्टिमाकृष्टवती। भारतीयविद्यासु विशेषेण काव्यनाटकव्याकरणेषु निष्णातानां लाहिड़ीपादानां दृष्टिर्बाहुल्येनानन्यसाधारणमार्गेण विषयेषु

निपतति स्म। विश्वकविना रवीद्रनाथेन वैयाकरणस्यैवंविधमालेख्य-मालिखितम्।

'आसे गुटि गुटि वैयाकरण
धूलिभरा दु'टि लइया चरण
चिह्नित करि राजास्तरण
पवित्र पदपङ्के।
ललाटे विन्दु विन्दु घर्म,
वलि-अङ्कित शिथिल चर्म,
प्रखरमूर्ति अग्निशर्म—
छात्र मरे आतङ्के।
कोन दिके कोन लक्ष ना क'रे
पड़ि गेल श्लोक विकट हाँ क'रे,
मटर कड़ाइ मिशाये कांकरे
चिवाइल येन दांते।
केह तार नाहि वुझे आगु पिछु,
सवे वसि थाके माथा करि निचु;
राजा बले, 'एँरे दक्षिणा किछु
दाओ दक्षिण हाते।'

इति—( पुरस्कार, सोनार तरी )।

परन्त्वाविष्कृतोऽस्माभिः सर्वथा विपरीतविधः कश्चन वैयाकरणोऽध्यापक-लाहिडीपादेषु। व्याकरणमपि नाम सरसं शास्त्रमिति तत एव प्रथम-मवगतमस्माभिः। सिद्धान्तकौमुद्यध्ययनकालेऽन्तरान्तरा तैः सह संशयोऽस्माकमजायत, कोऽयं ग्रन्थः कौमुदी 'ठाकुरमार झुलि' इति वा? भाषा-विज्ञानेन सहास्मज्जीवनस्यान्तरो योगस्तैः स्वयमुपलब्धो दर्शितश्चान्ते-

वासिजनेभ्यः। भाषायाः साहित्यस्य चान्तस्तत्त्वं तैर्यथा हृदयेनानुभूतं तथान्तेवासिनोऽपि विषयसमीक्षायां यथायथमुद्बोधिताः। काव्यनाटकपाठनकाले तैरात्मा याथार्थ्येनैव रसलोकं नीतः। ग्रन्थानां प्रतिपंक्ति वाङ्माध्यस्थ्येन कविस्तैः प्रत्यक्षीकृत इव। एकतो वैयाकरणेनापरतश्च साहित्यपाथोनिधिरसैकपिपासुनोपलब्धमिदं सत्यं लाहिड़ीमहोदयेन यद् वाङ्नाम भावैकवाहिनी रसलोकतरणी कविसहृदययोरिति। (अतएव रमणीयार्थप्रतिपादकः शब्दः काव्यमिति जगन्नाथोक्तं युक्तिभरावहम्।) कालिदाससन्दर्भाणां व्याख्यानावसरे तदीया वाक्साहित्यरसिकता विशेषेण प्रकटितास्मभ्यम्। दिङ्मात्रमुदाह्रियते।

शाकुन्तले प्रथमेऽङ्के 'वाचं न मिश्रयति यद्यपि मद्वचोभि'रिति (११२८) शकुन्तलामुद्दिश्य दुष्मन्तस्योक्तौ 'वाचमि'ति स्त्रीलिङ्गैकवचनस्य 'वचोभि'रिति नंपुसकबहुवचनस्य च तात्पर्यं लाहिड़ीमहोदयैरेवं व्याख्यातम्। अहं दुष्मन्तः पुरुषोऽतो मे वचनं नीरसमिति नपुंसकलिङ्गेन व्यज्यते। सा तु स्त्रीति तस्या वचनमपि स्वभावरमणीयमिति स्त्रीलिङ्गेन व्यज्यते। मया तावदेतावन्ति वचनान्युदाहृतानि, सा तु वाक्कणामात्रमपि न योजितवतीत्यहो दुर्लभता तदीयवाङ्माधुरीक्षरणस्येति वचनभेदेन व्यज्यते। एतादृगेव हि पदप्रयोगकौशलं कालिदासस्य।

एवं सप्तमेऽङ्केऽभिज्ञातां शकुन्तलां यदाह दुष्मन्तः—

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बद्धबिन्दुरधरं परिबाधमानः।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवेयम्॥

इति (७।२५), तत्र 'तं बाष्पमि'ति द्वितीयार्द्धे द्वितीयाविभक्तिनिर्देशेऽपि प्रथमार्द्धे 'यो (बाष्प)' इति प्रथमानिर्देशः किमर्थः? लाहिड़ीमतानुसारेणोक्ते कर्मणीयं प्रथमा प्राधान्यद्योतिका। एतेन पञ्चमेऽङ्के परित्यागदृश्ये

शकुन्तलाश्रूपेक्षणस्थानौचित्यं प्रतिपादितं यदधुना ( सप्तमेऽङ्के ) दुष्मन्तेऽनानुभूयतेतमाम्। अतएव तत्प्रमार्जनसङ्कल्पो विहितः।

मेघदूते 'कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे' इत्यत्र ( १।३ ) 'दूरसंस्थे' इति पदे संस्थाशब्दो लाहिड़ीमतेन 'आकृति' (form)-परः। यस्य शारीरिक्याकृतिरेव दूरे वर्तते मनस्तु प्रियाकण्ठे एव श्लिष्यते—यथा प्रकृते निर्वासितस्य यक्षस्य (तादृशस्य जनस्य) मेघालोके चेतोऽतितरामन्यथावृत्ति भवत्येवेति भावः। एवं 'जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोन' इत्यत्र ( १।६ ) 'प्रकृतिपुरुषं' इति विशेषणेन मेघो नारीपुरुषयोः हृदयनिहितभावाभिज्ञस्तयोर्मेलने प्रयासी चेति यक्षस्याभीष्टसिद्ध्यनुकूल आशयोऽभिव्यज्यते। अत एव तस्मिन् यक्षस्यार्थित्वं युज्यते। एतदुत्तरवर्तिनि श्लोके 'सन्देशं मे हर धनपतिक्रोधविश्लेषितस्ये'ति द्वितीयचरणे ( १।६ ) कुबेरादिशब्दपरिहारेण धनपतिशब्दप्रयोगः सुलभक्रोधत्वप्रतिपादनपरो यदुच्यत्ते वङ्गभाषायां 'टाकार गरम' इति।

कालिदासस्य वाग्भङ्गीमुपजीव्य लाहिड़ीमहाभागैः १९६४ संवत्सरे नूतनदिल्ल्यां षड् विंशप्राच्यविद्याविश्वसम्मेलनस्य लौकिकसंस्कृतविभागे तथा च कदाचिदुज्जयिन्यां कालिदाससमारोहे यद् भाषणं प्रदत्तं तत्रैवंविधानि स्थलानि मनोरमवाङ्नैपुण्येन पर्यालोचितानि।

'काव्येषु नाटकं रम्यम्'। नाटकाध्यापनकाले लाहिड़ीमहाभागानां सहृदयता सम्यगभिव्यक्तिं भजते स्म। अभिनयभङ्ग्यैव पठ्यन्ते स्म श्लोकपंक्तयस्तत्रभवता। वस्तुगत्या तावन्निपुणोऽभिनेतेति चिरमासीत् प्रसिद्धिस्तस्य। वङ्गीयानि तथा संस्कृतानि नाटकानि सुबहून्यभिनीतानि तत्रभवता। ढाकाविश्वविद्यालयेऽध्यापनकाले विविधेषु छात्रावासेषु चात्राणामभिनयशिक्षणभारस्तत्रभवत्येव न्यस्तोऽभूत्। उत्तररामचरिताध्यापनकाले प्राय एवेमे सहृदयधुरीणा अश्रुपूर्णाकुलेक्षणा गोचरीकृता अस्माभिः। स्वयमभिनेतृणामेषां काव्यरसपरिवेषणे विशिष्टमासीत् पाटवम्। यद्यपि लेखन-

माध्यस्थ्येनास्य परिचयो दातुं न शक्यते तथापि दिङ्मात्रोदाहरणे विधीयतेऽत्र यत्नः ।

उत्तररामचरिते प्रथमेऽङ्के—

लक्ष्मणः—

सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।
आर्येणास्मिन्

रामः—

विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥

इत्यत्र (३।३३) तृतीयचरणे 'वत्सैतस्मादि'ति पाठो नाटकीयतयाऽवहेय इति व्याख्यानं लाहिड़ीपादैः । एतत्पाठानुसारेण प्रथमार्द्धान्ते लक्ष्मणोक्तिः समाप्यते, द्वितीयार्द्धस्तु रामोक्तिरेव । परन्तु 'आर्येणास्मिन्' इति पाठे एतत्पदद्वयमपि लक्ष्मणोक्त्या क्रोड़ीक्रियते । 'नूतनस्तोयवाह' इत्यन्तमभिधाय भूयो जल्पनोन्मुखो लक्ष्मणो रामेणासहमानेन बलान् निरस्तः। अनेन चिन्तितमात्रस्यापि जानकीविप्रयोगस्यात्यसह्यत्वं स्फुटीकृतम् । तेन प्रथमाङ्कघटितवृत्तस्य चरम-tragedy (विप्रलम्भ)-रूपत्वं दर्शितम् । परन्तु सर्वमेतद्रामस्याभिनयनैपुण्यमपेक्षते ।

सीताविरहो हि कठिनतमोऽभिघातो रामस्य जीवने । यदुक्तं तेनैव—'किमस्या न प्रेयो यदि पुनरसह्यो न विरह' इति (१।३८) । एतदनन्तरमेव प्रविश्योक्तं प्रतिहारिणा—'देव ! उवट्ठिदो' इति । पताकास्थानमेतत् । श्रुत्वैव विकम्पितो रामः—नोक्तमेतद् ग्रन्थे, लाहिड़ीमहाभागैस्त्वभिनयेन सूचितम्—'अपृच्छत्, 'अयि, क' इति । अशृणोच्च, 'आसण्णपरिआरओ देवस्स दुम्मुहो' इति । अनेनैव दुर्मुखेनानीतः कठिनतमः सन्देशवज्रः । एतस्मादुत्तरं निखिलं वृत्तं विदितं समेषाम् ।

द्वितीयेऽङ्के पुनराविर्भूतो रामो जनस्थाने। तत्र शम्बूकं निहन्तुमुद्यतस्य रामस्याद्योक्तौ—

रे हस्त दक्षिण! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य बाहुरसि निर्भरगर्भखिन्न—
सीताविवासनपटोः करुणा कुतस्ते॥

इत्यत्र (२।१०) 'रे हस्त' इति पाठे रामस्य हृदयगतभावस्य यथाभिव्यक्तिर्भवति न तथा 'हे हस्त' इति पाठे। एतत्त्वाचार्यस्याभिनयभङ्गीत एव स्पष्टीभूतम्। परित्यक्तकान्तस्य रामस्य हृदयवेदना कतिभिर्जनैरुपलब्धा? उपलब्धा खलु महाकविना भवभूतिना येनोक्तम्—

अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः॥

इति (३।१)। उपलब्धा च साचार्यपादैर्येषामभिनयभङ्ग्यैवोन्मुक्तमस्मत्पुरतोऽतिगूढं रामहृदयम्।

तृतीयाङ्कस्य प्रारम्भे श्रूयते नेपथ्ये—

सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्द्धितोऽभूत्।

इति। अथ सोत्कण्ठं सीतादेव्या 'किं तस्स' इति पृष्टे श्रुतोऽवशिष्टः श्लोकार्द्धः—

वध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना संनिपत्याभियुक्तः॥

इति (३।६)। अत्र 'वध्वा सार्द्धमिति रसावहा पदद्वयी समग्रतृतीयाङ्कस्य परिवेषालेखनेऽतितरां युज्यते। सर्वमेतद् यथोचितं व्याख्यातमाचार्यपादैः। न केवलं वयं धन्या अपि तु कविरपि धन्यो येन लब्ध एवंविधः सहृदयो व्याख्याता। राजशेखरेण प्रतिभाया द्वैविध्यमुक्तं कारयित्री भावयित्री

चेति। 'कवेरुपकुर्वाणा कारयित्री।.... भावकस्योपकुर्वाणा भावयित्री। सा हि कवेः श्रममभिप्रायं च भावयति। तया खलु फलितः कवेर्व्यापारतरुः। अन्यथा सोऽवकेशी स्यात्' (काव्यमीमांसायां कविरहस्ये चतुर्थाध्यायगतम्)। तस्या भावयित्र्याः प्रतिभायाः प्रकृष्टनिदर्शनमुपलब्धं लाहिडीमहाभागेषु।

पाठ्यग्रन्थेभ्योऽन्यत्रापि विविधतथ्यानि छात्रैरेषां सकाशादवगम्यन्ते स्म। विशेषेणातिक्षुद्रज्ञातव्यतथ्यानामिमे मञ्जूषास्वरूपा आसन्। द्वित्राण्युदाह्रियन्ते। रपरत्वाभावेऽपि 'कल्याण' शब्दे मूर्द्धन्यणकारः कुतः? शब्दस्यास्यादौ 'कर्याण'मिति रूपमासीद् यतो रलयोरभेदात् कल्याणमिति जातम्। तारतम्यशब्दस्य का व्युत्पत्तिः? तरप्तमपौ (तरतमौ) प्रत्ययौ विभज्येः ष्वाधिक्यन्यूनताप्रत्यायकौ। तयोरर्थमात्रमादायानुकरणपरात् 'तरतम' शब्दाद् भावे ष्यञा रूपं 'तारतम्यमि'ति पाण्डित्यादिवत्। 'महाजन' शब्दो जनतावाचकोऽतो 'महाजनो येन गतः स पन्था' इति महाभारतोक्तस्य 'जातस्य हि ध्रुवो मृत्यु'रित्यर्थः। क्वचिच्च हास्यरसस्पर्शेनापि तैस्तथ्यानि निवेदितानि। तद् यथा—'स्वच्छ'शब्दस्यार्थो बहुष्वेव जनेषु स्वच्छः, 'अच्छ'शब्दस्यार्थस्तु न तथा स्वच्छ इति चित्रमेतत्। 'अनुलोम' 'प्रतिलोम' शब्दौ कथमनुकूलप्रतिकूलपरौ? लोम अनुगतम् अनुलोम, लोम्नः प्रतिगतं प्रतिलोमेति। अनयोः क आशय इति चेत्, कर्तितश्मश्रुको भूत्वा गण्डदेशे, मुण्डितमस्तको भूत्वा वा शिरस्तले लोमधाराया आनुकूल्येन प्रातिकूल्येन चाङ्गुलिसञ्चालनेनैव ज्ञास्यसि रहस्यम्। एतानि तथ्यान्यनुरागिभिश्छात्रैरादरेण 'लाहिड़ीर चुटकी' इति व्यपदिश्यन्ते स्म।

विदिततथ्या बहवो भवन्ति, परिवेषणकौशलं तु न समेषाम्। हास्यस्पर्शेन प्राय एव विषयविनिवेदनं रमणीयतरमजायतैषामिति विशेषेण स्मृतिपथमायात्यस्माकम्। हास्यरसिकता sense of humour इति यदुच्यते—एषां प्रकृतेस्तथाविधं वैशिष्ट्यमासीत। यत् क्वचिन् मनोवेदना-

प्रकटनकालेऽपि व्यक्तमासीत्। कदाचित् कस्मिन्नप्यप्रीतिकरप्रसङ्गे सखेदं तैरुक्तम्—'चक्र, चक्र।' इति। एतच्छ्रुत्वा केनाप्यन्तेवासिनोक्तम्, 'आचार्य! चक्र इति किम्? ननु चक्रान्त इत्युच्यताम्'। आचार्येण सपद्येवाभिहितम्, 'न हि न हि। अन्तस्तु नाधुनापि समायातः। इदानीमपि चलतीदं चक्रमिति।

प्रायेण सुपण्डिताः कृतिनोऽध्यापका न भवन्ति, प्रायेण च कृतिनोऽध्यापकाश्छात्रवत्सला न भवन्ति। अखिलमेतद् वैशिष्ट्यं मिलितमासीत् लाहिड़ीमहाभागेषु। अध्यापनकार्यं तैर्न जीविकोपार्जनोपायत्वेनापि तु जीवनस्य व्रतरूपेण परिगृहीतमासीत्। पाठने कदाप्येषां नागता क्लान्तिः। अस्माभिः कदाप्येषां casual leave-रूपेण कर्मविरतिग्रहणं न दृष्टम्। किमधिकेन—संस्कृतमहाविद्यालयेऽध्यक्षताकाले आत्मनः कन्यकाया विवाहदिवसेऽपि तैः किल पाठनार्थं महाविद्यालयः प्रागतः। वात्सल्येन समेषामन्तेवासिनां हृदयानि तैर्जितानि। विद्यामन्दिरे गृहे पथि सर्वत्र तदीयवात्सल्यधारया तृप्तमभूदन्तेवासिहृदयम्। अद्यत्वे छात्राध्यापकसम्पर्के सर्वत्र तिक्तायमाने सति नूनं लाहिड़ीमहाभागानामाचरणमिदं सश्रद्धस्मरणार्हमस्माकम्।

'संसर्गजा दोषगुणा भवन्ति।' मन्ये सारस्वतमार्गपथिकेऽपेक्ष्यमाणा गुणा न लाहिड़ीपादैरंशतस्तावत् स्वगुरुभ्योऽधिगताः। स्वनामधन्यानां निष्ठावतां विद्वत्प्रकाण्डानां सान्निध्यमासादितमेभिर्जीवनपथस्य विभिन्नेषु स्तरेषु। तेषु केचन यथा—महामहोपाध्याया हरप्रसादशास्त्रिणः, महामहोपाध्यायाः आशुतोषशास्त्रिणः, पण्डित-योगेन्द्रनाथ तर्कवेदान्ततीर्थाः, पण्डित-शितिकण्ठवाचस्पतयः, पण्डित-गुरुचरण तर्कदर्शनतीर्थाः, पण्डित-श्रीशचन्द्रचक्रवर्तिनः, अध्यापक-शिवप्रसाद-भट्टाचार्याः, अध्यापक-सुशीलकुमार दे महाभागाः, महामहोपाध्यायाः सकलनारायणशास्त्रिणः, विद्यावाचस्पतयो राधागोविन्द वसाकाः, पण्डित केदारनाथ सांख्यतीर्थाः, अध्यापक

R. L. Turner-महाभागाः, अध्यापक Bruno Liebieh-महाभागाः, अध्यापक F. W. Thomas-महाभागाः, अध्यापक H. W. Baily-महाभागाः। विद्वद्वरेष्वेषामान्तरिकी भक्तिरसधारा यथा सदैवासीत् प्रवहन्ती तथा साधनयाचरणेन च तेषां सम्प्रदायस्य संरक्षणे सततमासीत् प्रयत्नः। अधीतबुद्धविद्यानामाचरणप्रचारणे नास्तामेषां कथामात्रविषयौ। यदुक्तं श्रीहर्षेण नलचरित्रमुपलक्ष्य—

अधीतिबोधाचरणप्रचारणै-
दशाश्चतस्रः प्रणयन्नुपाधिभिः।
चतुर्दशत्वं कृतवान् कुतः स्वयं
न वेद्मि विद्यासु चतुर्दशस्वयम्॥ इति,
(नैषधचरिते, २।४)

तल्लाहिडीपादेष्वपि समानं युज्यते। लाहिडीमहाभागानामान्तरो विश्वास आसीत्—शिक्षका एव जातिसंघटनस्य मूलस्तम्भस्वरूपाः, तैस्तावन्निरन्तरं निष्ठया स्वकर्तव्यतया साधनीयं यथा छात्रेषु महनीयादर्शपदं लभेतेति। तदीयमाचरणमस्य विश्वासस्यैव बाह्यः प्रकाशोऽभवत्। 'वंशो द्विधा विद्यया जन्मना च' (सि० कौ०, ६७३) इति भट्टोजिदीक्षितवचनमुद्धृत्य तैः प्रायः कथ्यते स्म—देहावसानेऽपि विद्यावंशेन वयं जीवितुमिच्छामः। आयत्यां यदि द्वित्रैरपि छात्रैः स्मर्यामहे तज्जीवनं जीवनमिति। नूनं तदीया प्रत्याशेयं सफला जाता।

न केवलमासी-ल्लाहिडीमहाभागानां विद्वद्वरेष्वासक्तिरपि तु विद्वद्वरा अपि सदैव तेषु प्रशंसापरा आसन्। विस्तरभियात्र केवलं तदीयाध्यापक-पादानाम् R. L. Turner-महाभागानां प्रशस्तिरुद्ध्रियते।—

......He has a wide and deep knowledge of Sanskrit, and I found in him the most admirable and exceptional combination of the profound and accurathe learning of the traditional school

with a thoroughly scientific outlook and readiness to examine and, if necessary, accept new points of view.

'I, therefore, chose for him a subject of grammatical and linguistic nature, whicn, owing wits peculiar difficulties, had been too long neglected by sanskrit scholars, namely, the word-order of Sanskrit and its later Indo-Aryan forms. This research necessitated the most detailed laborious study of of selected passages for the prose of Brāhmaṇrs, the Epics, Classical Sanskrit, Pali and the Inscriptions of Aśoka, and was conducted with painstaking thoroughness and an insight into the problems presented, altogether admirable. The thesis established important facts concerning word-order in Indo-Aryan hitherto completely overtooked.

Dr. Lahiri's intelligence high character and genial disposition made him always a most welcome guest in my our family circle.'

अध्यापननैपुण्यवत् सभादिषु भाषणे पाटवस्य प्रसिद्धिरासीत् लाहिडी-महाभागानाम्। विद्यायतनादिसभासु बहिश्च जनसंसत्सु भारतीयकृष्टे-र्विविधासु शाखासु तत्प्रदत्तानि भाषणानि सर्वैर्मुग्धैः श्रूयन्ते स्म। सङ्गीत-क्रीड़ाप्रमुखविषयेषु—विशेषेण क्रिकेट् क्रीड़ायामेषामतितरामनुराग आसीत्। आन्तर्जातिकक्रिकेटक्रीड़ायां भारतीयसंघस्य जयलाभे कस्यापि भारतीय-खेलकस्य विशेषेण साफल्ये वा तेषामानन्दस्य परा काष्ठा लक्ष्यते स्म। विद्यायतनेऽवस्थानकालेऽपि नभोवाणीप्रचारितात् क्रिकेट् क्रीड़ाधाराविवरणात् फलं ज्ञातुमनुक्षणमौत्कण्ठ्यमेषां व्यक्तं जायते स्म। अस्मास्वेषामयमेक उपदेशोऽभूत्—अध्ययनतोऽन्यत्रापि यस्मिन् कस्मिन्नप्येकस्मिन् विषयेऽनुरागः पोषणीय इति।

कृतं भूरिविस्तरेण। निवन्धस्यास्य समापनात् पूर्वं तत्रभवद्भिः प्रवोधचन्द्रलाहिडीमहाभागैर्विरचितानां सन्दर्भाणामेका सूची समुपस्थाप्यते। परममिदं खेदकारणमस्माकं यत् सर्वेऽमी सन्दर्भा नाद्यापि प्रकाशमापन्नाः। एतद्विदित्वा यदि केचित् सानुकम्पा विद्वत्प्रिया अग्रेसरीभूयैषां प्रकाशने कृतयत्नाः स्युस्तर्हि तृप्तिह्रदमवगाढ़ा वयं सर्वथा सहायतां विधास्यामः।

### (क) प्रकाशिताः

१। *Concordance Pāṇini-Patañjali* (*Mahābhāṣya*), Indische Forschungen, Heft 10, Breslan, 1935.

२। *A Higher Sanskrit Grammar and Composition* (पाणीयम्)—पण्डितहृषीकेशशास्त्रिणा सह, कलिकाता, प्रथम संस्करण, १९५६ [वङ्गभाषया]

३। *'The Negative Construction in Indo-Aryan'*, *The Dacca University Studies*, Vol. I, No. 2 (April 1936).

४। 'Sanskrit Kāvya Literature', *The Cultural Heritage of India*, Sri Ramkrishna Centenary Memorial Belur Math, Calcutta. Vol. III.

### (ख) अप्रकाशिताः

१। *Studies in the Syntax of Indo-Aryan Prose* (Ph.D. thesis, किञ्चित् परिवर्तनेन प्रस्तुतमस्ति)

२। Subandhu's *Vāsavadattā* the commentary of Jagaddara and extract from two other commentarver [edition].

३। The Alphabet in Sanskrit Grammatical Literature.

४। The Nature and Scope of the Figure Śleṣa.

५। Basic Forms of Sanskrit Pronouns.

६। A Critical Edition of the *Kāśikā* Commentary on the *Aṣṭādhyāyī*.

चत्वारि हस्तलिखितपुस्तकानि परीक्ष्य सम्पादितमिदं पुण्यपत्तनस्थभाण्डागारप्राच्यविद्यान्वेषणालये (B. O. R. I.) न्यस्तमास्ते।

एतद्व्यतिरिक्ता आकाशवाणीकलिकाताकेन्द्रतः प्रचारिताः साहित्यविषयका बहवो निबन्धा विरचिता अभवन् येषामेकत्र सङ्कलनमावश्यिकम्।*

---

*एतत्सन्दर्भविरचने लाहिड़ीपारिवारिकेभ्योऽधिगतं साहायकं कृतज्ञतया स्वीक्रियते। लाहिड़ीतनयैः १९५६ संवत्सरे विरचितायाः पितुर्जीवनकथाया अवगतानि कति तथ्यान्यप्यत्र संनिविष्टानि।

# 'बुड़ोदा'-भणितं पण्डितराजकृत-काव्यलक्षण-सम्पर्कितं स्वप्नवृत्तम्

[ निबन्धकः—श्रीसिद्धेश्वर चट्टोपाध्यायः ]

जानन्त्येव भवन्तो 'बुड़ोदा'ख्यं वाचाटं संस्कृत-साहित्य-परिषत्-सदस्यं नाट्यरसिकम्। नट-परिषदि बहूनां प्रियोऽसौ। पल्लव-ग्राहितापि तस्य सुविदिता भवताम्। कति वर्षाणि यावदसौ विश्वविद्यालये स्नातकोत्तर-श्रेण्यामेवालङ्कारशास्त्रमध्यापयतीति श्रूयते, परं न जाने कदानेन तदेव शास्त्र-मधीतम्। यथा तथा वा भवतु, तस्यैव स्वप्नवृत्तमेकमत्र लिख्यते तस्यैव भाषया यावन्मे स्मृतावायाति। विस्मृति-वशाद् यदि किञ्चित् परित्यज्यते यदि वान्यथा लिख्यते तत्र तु ममैव दोषः। नटोऽसौ, संलाप-रूपेणैव स्व-स्वप्नवृत्तं वर्णितवान्, यत्र तत्र नाट्य-निर्देश-रीत्या स्वावस्थां तथा चान्येषां कार्यमकथयत्। मया तु तथैव लिख्यते यतो लेखकस्य स्वातन्त्र्यं न शोभनमिति मे मतम्। इतः प्रभृति अहंपदेन वक्ता बोध्यः। एवं वर्णितं तेन—

कति दिनानि प्रबलज्वरेणाक्रान्तः शय्यामाश्रित्य स्थितोऽहम्। नैकविधा-श्चिन्ताः कल्पना वा श्यामलां मे मनोभूमिं सर्वथा तृणरहितामकुर्वन्। अनेकशः स्वप्नोऽपि स्वल्पनिद्रा-रन्ध्रं प्राप्य मस्तिष्कं मेऽपीड़यत्। वैद्येन तूक्तं सर्वमेतज्ज्वरविकार-जनितमिति। एकदा तु मध्याह्ने केचन छात्राः प्रश्नबाणैर्मां विध्यन्तीति स्वप्नेऽपश्यम्। नासीत्तदा कोऽपि सन्निहितः। निःसहाय एकाकी दर्पेणाहं तान् प्रतिरोद्धुं सज्जोऽभवम्। मनसि त्वासीद्

भीतिः, अध्यापका एव जानन्ति तस्य कारणम्। यातु—, प्रश्नस्तु तेषामेक एव,—किं तावत् काव्यलक्षणमिति। पुरा मया कति प्रस्थान-मत-प्रस्तर-गुटिका गिलिताः। तास्तु नासन् सम्यग् जीर्णाः। तास्तु सर्वा मया समुद्गीर्णाः, मन्ये ज्वर-विकारेणात्र दोषो न ग्रहणीयः। नासीत्तेन दुष्टानां तेषां तुष्टिः। ते तु एकैकशो मयोक्तानां मतानां खण्डनानि उपस्थापितवन्तः। किं पलायिष्ये इति चिन्तयतो मे मानस-गोणिकायां सुरक्षितं पक्वेष्टकसदृशं पण्डितराज-जगन्नाथ-मतमस्तीति स्मृतिरूपलब्धा मया। साटोपं तदेव निक्षिप्तवानुत्तररूपेण तेषां दुष्टानां प्रश्नस्य,—रमणीयार्थ-प्रतिपादकः शब्दः काव्यमिति। एकेनैवाघातेन पूर्वं ये किं तावत् काव्यलक्षणं किं तावत् काव्यलक्षणमिति विरोतुमारभन्त, ते सर्वे स्तब्धा जाताः। स्वमस्तकं कण्डूयमाना सर्वे स्थिताः। मुखानि केषांचिद् युक्त-योगि-वदनानीव भाव लेशहीनानि, केषाञ्चिच्च सर्वं बुद्धमिति तुष्टिविकशितान्यासन्।

द्वित्रा भृशं चिन्तामग्ना जाताः, तेषामेका,-नाम तु तस्या न स्मरामि,-परं प्रकृत्या मुखरा सासीत्। इतः सा मुखरानाम्नी।

मुखरा—का तावद्रमणीयता ?

( दुष्टानामन्यतमो य इतः प्रभृति दुष्ट इति निर्दिश्यते )

दुष्टः—( साटोपम् ) कथम्? रमणीयता च लोकोत्तराह्लादजनकज्ञान-गोचरता। लोकोत्तरत्वं चाह्लादगत-चमत्कारत्वापरपर्यायोऽनुभव-साक्षिको जातिविशेषः। ( सर्वमेकेनैव निःश्वासेन गल्-गलिति कृत्वा समुद्गीर्णवान् )।

( परमानन्दो मे मनस्यजायत छात्रस्येदृशीं स्मरणशक्तिं दृष्ट्वा। परीक्षावसरे पुस्तकं पश्यन् किमयं लेखिष्यतीति चिन्तयतो मे शङ्कापि जाता )

मुखरा—( प्रस्तर-खण्डमिव क्षुद्रं प्रश्नं निक्षिप्तवती ) तर्हि रमणीयता-नाम-ज्ञानस्य विषयत्वं किम् ?

अहम्—( सानन्दम् ) एवमेव वत्से। परं न यस्य कस्यापि ज्ञानस्य। अपि तु येन ज्ञानेन लोकोत्तर आह्लादो ज्ञायते तस्यैव ज्ञानस्य। लोकोत्तरत्वञ्चाह्लादसामान्यस्य व्याप्योऽवान्तरो जातिविशेषः। तस्य च पर्यायशब्दश्चमत्कारत्वम्, तच्चानुभवसिद्धम्।

( छात्राणां जातः परमेव तोषः। तैस्तु सर्वमबुध्यत यन्मया किमपि न बुद्धम्। )

मुखरा—( गाम्भीर्यमवलम्ब्य सविनयम ) भवतोच्यते रमणीयत्वं ज्ञान-विषयत्वम। तर्हि येन ग्रक्षितस्यार्थस्य प्रतिपादकः शब्दः काव्यं सोऽसौ रमणीयः ज्ञानस्य विषय इति किम् ?

( काचिद् विज्ञा गम्भीरा या तत्रासीदेतावन्तं कालं मौनमवलम्ब्य )

विज्ञा— ( स्वबुद्धिप्राखर्य-प्रदर्शनाय ) निश्चितमेव, तत्र कः सन्देहः।

मुखरा—रमणीयतेत्यस्य पर्यायशब्दश्चमत्कारत्वं न किम् ?

पण्डिता—( असौ पण्डिम्मन्या ) निश्चितमेव। पण्डितराजेन श्रीमता जगन्नाथेनोक्तं चमत्कारत्वा........

मुखरा—तत्तु ज्ञायते। चमत्कारत्वशब्देन रमणीयता, रमणीयता-शब्देन च चमत्कारत्वमिति कथितम। तेन किमेतयोरेकतरस्य वा स्वरूपं ज्ञायते ? यदुक्तमनुभवसाक्षिको जातिविशेषस्तत्रापि पृच्छ्यते—यस्यानुभवसाक्षिकत्वमुच्यते तमवलम्ब्य किं प्रचलति तर्क आलोचना वा ? यदि वा मन्यते सेयमालोचना केवलमालोचनायै छात्राणां बुद्धिवैशद्याय वा तत्रापि प्रश्नो जायते—कस्य केषां वानुभव एव तत्र प्रमाणम ?

पण्डिता—कथम ? सहृदयानामेव। येषां काव्यानुशीलनवशाद् विशदीभूते मनोमुकुरे वर्णनीय-तन्मयीभवन-योग्यता ते हृदय-संवादभाजः सहृदया इति लोचनटीकायामुक्तं ( ध्वन्या—१।१ ) तावदभिनवगुप्तेनैव। तेषां सहृदयानामनुभव एव प्रमाणम।

मुखरा—सुष्ठूक्तम्। तेन तु विद्यार्थिनो वयं ये तावदपरिशीलितबुद्धयस्तैः किमपि काव्यमकाव्यं वेति विचारयद्भिः सहृदय एवान्वेष्टव्यः। चमत्कारशब्दस्यार्थस्तु पण्डितराजेन नोक्तः। स तु सहृदयानामेवानुभवगोचरः।

(अधुना प्राप्तो मयावसरः। किमपि वक्तव्यमेव यस्यार्थस्तावन्मया सुष्ठु न ज्ञायते छात्राश्च चमत्कृता भवन्ति)

अहम्—किमेतदपि न ज्ञायते यदभिनवगुप्तेनोक्तं चमत्कृतिरास्वादप्रधाना बुद्धिरिति (ध्वन्या—४।१६) अथवा,—सा चाविघ्ना संवित् चमत्कारः।........ भुञ्जानस्याद्भुत—भोगस्पन्दाविष्टस्य च मनःकरणं चमत्कार इति (अभि-भा-, प्रथम खण्डे २७६ पृष्ठायाम)।

पण्डिता—(त्वरितम्) चमत्कारश्चित्तविस्ताररूप इति (सा-द ३।३) विश्वनाथेनाप्युक्तम्।

मुखरा—अभिनवगुप्तेन किं रसमुद्दिश्यैव नैतत् सर्वमुक्तम्?

अहम्—निश्चितमेव। स्पष्टमुक्तं तेन (अभि-भा-, प्रथम खण्डे २८० पृष्ठायाम) लोके सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कार... रसनास्वादन....विश्रान्त्यादिशब्दैरभिधीयते इति। चमत्कृतिरेव रसास्वादनम्। रसस्तावदास्वादस्वरूप एव। तस्यास्वादनमिति अन्नपाकादिवद् व्यवहारः।

मुखरा—तर्हि रमणीयता, येयमलौकिकानन्दसंवित्, सा तु रसाभिन्ना। किमेष पण्डितराजस्याशयः?

विज्ञा—(नैष तर्को रोचते, अत ईषदुत्तेजिता) तेन का हानिर्भवत्याः? (मया तु ज्ञातमेव यदियं मुखरा किमपि मनसि कृत्वा कथयतीति, अतो मौनमेव वरमिति नीतिराश्रिता मया)

मुखरा—न मे कापि हानिः, परं जगन्नाथस्येति मन्ये।

तुष्टः—कथम्?

मुखरा—तेन रमणीयता ज्ञानगोचरतेति कथितम्। समीकरण-रीत्या तर्हि रमणीयः = चमत्कारः = अलौकिकानन्द-संवित् = रसः। तर्हि रसो ज्ञानस्य गोचर इत्यायाति। पण्डितराजेन रसस्य किमास्वादस्वरूपत्वं ज्ञानस्वरूपत्वं वा न स्वीकृतम? ज्ञानस्वरूपस्य रसस्य कथं ज्ञानविषयत्वम?

(जातं मे मस्तकघूर्णनम्। स्मितविकसितदशना मर्कटा इव छात्रा मां प्रत्यासन् विनिहितदृष्टयः। मानो मे रक्षणीय इति मनसि निधाय)

अहम्—जगन्नाथस्य रसविषयकमालोचनं त्वया न बुद्धमिति मन्ये।

मुखरा—नैयायिक-रीत्या वेदान्तसाहाय्येन तदालोचयतो जगन्नाथस्य रसः सर्वथा वाष्पीभूत इति मन्ये। इच्छामि मे प्रश्नस्यानायासबोध्य-मुत्तरम।

अहम्—तत्तु नास्त्येव। तथापि शृणु तावदन्यदपि। अस्ति खलु बौद्धानां मतं यत्र ज्ञान-तद्विषययोरभेदः स्वीकृतः, यथा—सहोपलम्भनिय-मादभेदो नील-तद्धियोरिति सर्वदर्शनसंग्रहे सौगतमतम। परिणाम-वादिनामपि केषाञ्चिदेष एवाशयः। अपि च स्वप्रकाशनये ज्ञानस्वरूपस्य विषयस्य ज्ञेयत्वं स्वीकृतम्। तत्र ज्ञानाकारस्यैव विषयत्वम्। श्रुतं न किमभिनवगुप्तस्य मतं स्वाकारवदभिन्नत्वेन रसास्वाद इति?

(एतेषां वाक्यानामभिप्रायो मयापि न ज्ञायते सम्यगिति दुर्गानाम जपन्नेवासम।)

मुखरा—तर्हि किं नूतनमुक्तं नैयायिक-धुरन्धरेण? अभिनव-मम्मट-विश्वनाथैरपि यदुक्तं तदेव दुर्बोधनैयायिकरीत्या भणितम्। वाक्यं रसात्मकं काव्यमिति विश्वनाथकृते लक्षणे वा को दोषः पण्डितराज-रीत्या।

पण्डिता—( स्वबुद्धिवैशद्य-प्रदर्शनावकाशः प्राप्त इति मत्वा ) दोषस्तु दर्शित एव रसगङ्गाधरे, 'वस्त्वलङ्कारप्रधानचित्रकाव्ये विश्वनाथकृतं काव्य-लक्षणं न प्राप्नोतीति ।

मुखरा—एवमेव । पण्डितराजेन काव्यस्य भेदचतुष्टयमेव स्वीकृतम् । तत्र चतुष्टयेऽपि चमत्कृतेरेवास्तित्वं तेन दृष्टम् । चमत्कारत्वं च तन्मते रमणीयता । पूर्वमेव प्रदर्शितं यच्चमत्कृतिरेव रसनम् । यदि चित्रकाव्येऽपि सा वर्तते तर्हि तस्य मध्यमाधमे इति प्रकार-द्वयस्य किं मानम् ? अपि च तत्रापि रसो वर्तत इति स्वीकरणीयम् । अतश्चमत्कार-रमणीय-शब्दाभ्यां रसो नाभिप्रेतो जगन्नाथस्याथवा तेन स्वीकृतं काव्यस्य भेदचतुष्टयमनुपपन्नमिति पक्षद्वयस्यैकतरो ग्रहणीयः ।

( उभयतःपाशेयं रज्जुः, कुतः परित्राणमिति नयने निमील्य सर्षपपुष्पाण्यपश्यम् )

तुष्टः—कथमेतत् ? मध्यमाधमकाव्ये रसो नास्तीति तु नाभिप्रायः । तत्र तु रसः प्रधानतया न वर्तते, यथाक्रमेणार्थस्य शब्दस्य च चमत्-कारित्वं मध्यमाधमकाव्ययोरधिकम् ।

मुखरा—अप्रधानतयापि यदि चित्रकाव्ययो रसो वर्तत इति स्वीक्रियते तर्हि तस्य सरसत्वमपि स्वीकरणीयम् । अपिच विश्वनाथ-कृत-काव्यलक्षणं दूषयता यदुक्तं पण्डितराजेन ( वस्त्वलङ्कार.......दिक् ) संक्षेपेण तस्याशयस्तु चित्रकाव्ये नास्ति रसः ; अर्थचमत्कृतेः शब्दचमत्-कृतेर्वास्तित्वमादाय तत्र काव्यत्वव्यवहार इति ।

पण्डिता—एवमेव । तेन किमायातं यातं वा ?

मुखरा—यातमिदं यद् रमणीयता-चमत्कारत्व-शब्दाभ्यां जगन्नाथेन रसत्वं नाभिप्रेतम् । पूर्वाचार्य-व्यवहृताः शब्दा व्यवहृता न च तेन गृहीत-स्तेषां शब्दानां पूर्वाचार्य-स्वीकृतोऽर्थः, स्वयमपि तेषामर्थं न

दत्तवान्। अपि च कपिवाल-जलप्रवाहादि-वर्णने स्वीकृतं तेनास्तित्वं लोकोत्तराह्लादस्य। पण्डितराजमतेन तावदलौकिकाह्लादस्य सूचितमत्यन्तं सुलभत्वम्। पूर्वाचार्यमत-निराशाय वृथैव जगन्नाथस्य गदास्फालनमिति प्रतिभाति।

पण्डिता—कालिदासेन (शाकुन्तले प्रस्तावनायाम्—दिवसाः परिणामरमणीयाः) माघेन च (शिशुपालवधे—४।१७—क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः) रमणीयशब्दो व्यवहृतस्तत्रापि किं रसोऽभिप्रेतः।

मुखरा—तत्रापि रसनाख्य-लोकोत्तरानन्दसम्भोगो व्यज्यतेऽनेन शब्देनेति मन्ये। अपि च मया साहित्य-मीमांसायामस्य शब्दस्य व्यवहारमवलम्ब्य प्रश्न उत्थापितः। अपरोऽपि प्रश्नो मे मनसि वर्तते जगन्नाथकृत-काव्यलक्षणमधिकृत्य।

(पुनरपि प्रश्नः? तर्जन-गर्जनाभ्यां किं विताड़यितव्या एते? कालो नानुकूलः। अतः क्लान्तस्वरेण)

अहम्— कथय संक्षेपेण।

मुखरा— काव्यलक्षणे रमणीयशब्दं योजयन् पण्डितराजः प्रियः सञ्जातः केषाञ्चनास्मद्देशीयानामाङ्गलसाहित्यमीमांसकानाम्। ते तु मन्यन्ते रमणीयशब्देन पाश्चात्त्य-साहित्यमीमांसाया रम्यवादाख्यो मतवादः स्वीकृत इति। अस्मिन् विषये भवता किं मन्यते?

(किमपि न, परमध्यापकेन तन्न वक्तव्यमिति)

अहम्— रमणीयशब्दः पाश्चात्त्य-साहित्यमीमांसकानां निरुपाधिकं सौन्दर्यं (absolutely beauty) वा सुन्दरं (beautiful) वा बोधयत्विति पण्डितराजस्याशय आसीदित्यत्र नास्ति किमपि प्रमाणम्। तेन च तन्नोक्तम्।

मुखरा—अपरोऽपि प्रश्नः, शब्दार्थयोरेव काव्यत्वस्वीकारे का बाधा।

विज्ञा—( अवसरं प्राप्य ) तत्तु जगन्नाथेनैव कथितम्।

मुखरा—तत्रैव मे प्रश्नः। शब्दार्थाविव काव्यमिति मतस्य समालोचनायां जगन्नाथेन काव्यमुच्चैः पठ्यते, काव्यं श्रुतमर्थो न ज्ञात इत्यादिकं लौकिकप्रयोगमुपस्थाप्य सिद्धान्तितं लोके शब्दस्यैव काव्यत्वं गृह्यत इति। परं वाक्यद्वयमेतदर्थहीनम्। यद्यर्थो न ज्ञातस्तर्हि कथमेव ज्ञातं यत् काव्यमेव श्रुतं पठितं वा। सर्वथाबोध्येऽर्थे मेघदूतपाठश्रवणं सत्यपीरकथा-पाठश्रवणमित्येतयोः को भेदः? अर्थं परित्यज्य काव्यत्वव्यवहारः कथं सम्भाव्यते? पण्डितराजेन तावल्लोकव्यवहारस्य प्रामाण्यमुपस्थापितम्। तदपि न समीचीनमिति मन्ये। लोको वदत्येव—नील आकाशः, नीलः समुद्र इति। किं तत्त्वत आकाशे समुद्रे वा नीलत्वमस्ति? लोकव्यवहार एव यदि प्रमाणं तर्हि युक्तिजालस्य वा कोऽवसरः? लोके यदेव काव्यमुच्यते तदेव काव्यमिति भवतु काव्यलक्षणम्।

पण्डिता—काव्यपदप्रवृत्तिनिमित्तं तर्हि शब्दार्थयोर्व्यासक्तं प्रत्येकपर्याप्तं वा?

मुखरा—पूतिकुष्माण्डायतेऽयं कूटतर्कः। भवतु नाम शब्दार्थयोर्व्यासक्तमेव नतु प्रत्येकपर्याप्तम्।

पण्डिता—तेन ह्येको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तिः।

मुखरा—इष्टापत्तिरेषा। श्लोकवाक्यं न काव्यम्। यावदर्थो न ज्ञातस्तावदेव तस्य काव्यत्वमकाव्यत्वं वा किमपि नास्ति। काव्यत्वावधारणं तावत् कर्तृगतमेव (subjective)। लक्षणस्य प्रयोजनं तु वस्तुस्वरूपावधारणम्। तत्र च सामर्थ्यमपेक्ष्यते। यस्य नास्ति सर्वथार्थबोधस्तस्य काव्यत्वावधारणे सामर्थ्यमपि नास्ति। किमपि काव्यमकाव्यं वा तत्तु निर्णीयते तस्यार्थेनैव। जगन्नाथेनापि तदेव स्वीकृतं रमणीयार्थप्रतिपादकेत्यादिना।

तस्यार्थस्य प्रकाशाय च प्रयोजनं शब्दस्य। कथं तर्हि शब्दस्यैव काव्यत्वम्? अपि च प्रतिभास्वरूप-व्याख्यानावसरे कथं वा पण्डिराजेनोक्तं सा तु काव्यघटनानुकूलशब्दार्थोपस्थितिरिति? अहो नैयायिकवर्यस्य युक्तिजालविस्तारे पूर्वापरसामञ्जस्यम्! (क्रमेणोत्तेजिता) को वापराधो दण्डिनः? येनोक्तमिष्टार्थव्यवच्छिन्ना पदावली काव्यमिति। एतन्मतमेवावलम्ब्य स्वकीयबुद्धिप्रकर्षप्रदर्शनाय पूर्वाचार्यमतखण्डने जगन्नाथस्यास्फालनं सर्वथा व्यर्थमेव।

( प्रश्नस्य समुचितोत्तरदानेऽसमर्थस्य क्रोधप्रकाशनमेव नीतिरिति )

अहम्—एतावती ते स्पर्धा यत् पण्डितराजस्यापि मतं खण्डयितुमीहसे? एतादृशी विदुषी त्वम्। दूरमपसरन्तु सर्वे।

इत्युच्चैरुच्चार्य सहसापगतनिद्रोऽहं घर्मार्त्तकलेवरः समुत्थाय कमपि नापश्यम्। सिद्धान्तरूपेणोपस्थापितं जगन्नाथस्य काव्यलक्षणत्रयं मया नोक्तमित्यपि स्मृतिपथमागतम्। जातानुशोचना स्वप्नेऽपि कथं तल्लक्षणत्रयं विस्मृतमिति विचिन्त्य। किन्तु तदैवाचिन्तयं यत्तत्रापि लक्षणत्रये वर्त्तते चमत्कारस्तथा स्वीकृतं शब्दस्य काव्यत्वं विषयद्वयं यदधिकृत्यासीत् स्वप्ने तर्क इति। किं करणीयमिति चिन्तयन् मनसि निश्चयं कृतवान् यत् काव्यस्य सर्वथा दोषहीनं लक्षणमेव नास्ति, न च करिष्यते केनापि भविष्यति काले। कालेन सर्वमेव परिवर्तते का कथा काव्यलक्षणस्य। अतः काव्यलक्षणमेव न पाठयामीति छात्रास्तु काव्यं समालोचनाजातं च पठित्वा स्वस्वमानसप्रवणतानुसारेण किं तावत् काव्यमित्यवधारयिष्यन्तीति च मया सिद्धान्तितम्।

अशेषसम्मानार्हेभ्यः संस्कृत-साहित्य-परिषत्-पत्रिका सम्पादकमहोदयेभ्यः सश्रद्ध-नमस्कारं निवेद्य विज्ञाप्यते विनीतेन लेखकेन—

यदध्यापकमेकं सङ्कटान्मोचयितुं कोऽपि काव्यरसिकः प्राग्रसरो भविष्यतीति बुड़ोदा-भणितं वृत्तं भवतां पत्रिकायां प्रकाशनाय प्रेषयामि, कृतार्थश्च भविष्यामि यद्यविलम्बितमेव प्रकाशन-व्यवस्थावलम्ब्यते, विस्तरेणालमिति।

# रसविमर्शः

[ निबन्धकः—श्रीरामधन शास्त्री ]

अस्ति हि 'वाक्यं रसात्मकं काव्यमि'ति काव्यस्वरूपम्। काव्यं च द्विविधं भवति, श्रव्यं दृश्यञ्चेति। तत्र स्वभावत एवायमनुयोगो जागर्त्ति सहृदयहृदयेषु—अथ किंनिमित्तेयं प्रवृत्तिः काव्यस्येति। न खलु प्रयोजनमन्तरा किमपि कार्य्यमिहास्ति व्यवहारिके जगति। ततश्च मन्यामहे, सामाजिकेषु रसपरिवेशनायैव काव्यस्य प्रवृत्तिरिति मुख्यः कल्पो भवतु, 'नहि रसादृते कश्चिदर्थः प्रवर्त्तत' इति भरतेनाप्युक्तत्वात्। यत्तु 'काव्यं यशसेऽर्थकृते' इत्याद्यस्ति प्रयोजनमन्यविधमालङ्कारिकैरुक्तं, तत्त्वस्मादुक्तरूपात् प्रयोजनाद् गौणमेवेति ब्रूमः। तथाहि,—प्रथमतो रसविशेषपरिवेशकस्य काव्यस्य श्रवणतो दर्शनतो वा श्रोतारो दर्शकाश्च सामाजिका विमुग्धाः सन्तो यद्रसाम्बुधौ निमज्जन्ति, तदेव मुख्यं फलं तस्य भवति नु किम्? तदनन्तरं यत् खलु तत्तत्काव्यश्रावयितारः कवयो विपश्चित्समाजेषु समादृताः कीर्त्तिमन्तो भवन्ति, ततश्च समाप्नुवन्ति ते वदान्योत्तमेभ्यो जनगणेभ्यो राशीभूतानर्थान्। एवञ्चालङ्कारिकैरुक्तं फलमानुषङ्गिकत्वेन फलत्येवेति गौणमेवेदं फलं काव्यसृष्टेः। अथवा यथा तथा भवतु नाम, रसपरिवेशनमेव मुख्यं फलं काव्यसृष्टाविति वादे को वास्ति विवादावसरः।

इदानीमत्र स्वत एव समुदेति शिष्यजने जिज्ञासा,—अथ कोऽयं रसो नाम, स च कुतः प्राप्तश्चेति। तत्रैवं ब्रूमः—रस्यते भावनयानुभवेन

वास्वाद्यते. इति हि रसः। स च विभावादिव्यक्तो रत्यादिस्थादिभावरूपः। तदुक्तम्—

विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥

[ विश्वनाथ, ३।१ श्लो० ] इति।

भरतोऽप्याह—'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरि'ति [१।२७४] विभावो हि जनिमतां चित्तपरिवृत्तेर्निदानम्। काव्यस्य श्रवणेन दर्शनेन च मानवचित्तं निरन्तरमेकविधं न भवति, एकदैकविधमन्यदा चान्यविध-मवस्थाविशेषमापद्यते। तत्र विभाव एव हेतुः। तथाहि—शृङ्गाररसीय-काव्यस्य श्रवणेन दर्शनेन च यादृशी भवति सामाजिकानां चित्तवृत्तिर्न खलु तथा रसान्तरपरिपुष्टस्य काव्यस्य श्रवणाद् दर्शनाद् वा। तस्माच्चित्त-वृत्तेर्येयमवस्थाविशेष-परिवृत्तिः, सा खलु विभावनिबन्धनैव, तत्र विभावस्य कारणत्वात्। विभावोऽसौ द्विधा भिद्यते,—आलम्बनविभाव उद्दीपनविभावश्चेति। तत्र यदालम्ब्य भवति जनगणमनःसु भावस्य कस्यचित् समुन्मेषः, सोऽयमालम्बनविभावो नाम, यश्च तत्तद्भावसमुन्मेष-समुद्रिक्तायाश्चित्तवृत्तेः परिपुष्टिं साधयति, सोऽयमुद्दीपनविभावश्चेति। शाकुन्तले नाटके शकुन्तला ह्यालम्बनविभावः। तामालम्ब्यैव तत्र दुष्मन्त-गताया रतेर्जातत्वात्। तदानीन्तना वसन्तसमागमप्रभृतयस्तूद्दीपन-विभावस्थानीयाश्चेति। अनुभावस्तु चित्तसमुत्पाद्यो वहिर्दृश्यमानो दैहिको विकार एव। यः पुनर्व्यभिचारिभावः, स तु मानवचित्तगतानां विविधानामस्थायिनामवस्थाविशेषाणां समष्टीभूतः। एवञ्च निरुक्तरूपया त्रिविधया कारणसमष्ट्यैव भवति काव्यस्य श्रोतॄणां दर्शकानाञ्च मनःसु रसनिष्पत्तिरिति हि भरतसूत्रस्य तात्पर्य्यमपि फलितम्।

ततश्चैतावता शृङ्गारादिस्थायिभाव एव साक्षाद् रसानामुत्पादकः,

आलम्बनादयो भावास्तु तत्सहकारिण एवेत्यायातम्। स्थायिभावश्चाष्टविधः। यदुक्तं भरतेन,—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः॥ [६।१८] इति।

यथा खलु स्थायिभावा अष्टविधास्तथा तदुत्पाद्या रसा अपि। यदाह भरतः—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥ [६।१७] इति।

मतान्तरे शान्तोवात्सल्यञ्चेति द्वैविध्यमपि स्वीकृतम्।

अथ कुतोऽयं रसः समुपलब्धः? उच्यते,—अथर्ववेद एव हि रसोपलब्धेर्निदानम्। यदुक्तं भरतेन—

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ [१।१७] इति।

रस एव हि प्राणभूतः काव्यस्य। यथा प्राणानपहाय देहपिण्डस्यावस्थानं विफलम्, एवं प्राणभूतं रसमन्तरेण काव्यस्यापि। नीरसस्य तस्यापशब्दत्वात्। यदुक्तं ध्वनिकृता—

नीरसो हि निबन्धो यः सोऽपशब्दो महाकवेः।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः॥ इति।

एतावता रसपरिवेशनमेव हि काव्यसृष्टेः फलम्, न पुनरितरत् किमप्यस्ति, जगतो रसमयत्वात्। यथाह भरतः—

यथा वीजाद् भवेद् वृक्षो वृक्षात् पुष्पं फलं यथा।
तथा मूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः॥ [६।४२] इति।

तस्माद् रस एवास्वाद्यतमः। आस्वादश्च वासनया भवति। एवञ्च रामादिभिरभिनयवेलायां यो रस आत्मनानुभूय प्रकाश्यते, सामाजिकेऽप्यसावभिव्यज्यते एव। अभिव्यक्तिश्च समूहालम्बनात्मिका। सा च गुणभूतरत्यादिसहकृतप्रतीतिस्वरूपा। प्रतीतिश्च वासनासाध्या। ततश्च वासनाया अभावाद् वैयाकरणश्रोत्रियजरन्मीमांसकादीनां न रसास्वादः, निर्वासनानां रसास्वादनेऽनुपयुक्तत्वात्। तथाचोक्तं धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रङ्गान्तःकाष्ठलोष्ठाश्मसन्निभाः॥ इति।

## अश्वयुक् कृष्णपक्षः

[ निबन्धकः—श्रीशशधर स्मृतितीर्थः ]

"अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा॥"

इत्युक्तस्मृतिवचनेन अश्वयुक्कृष्णपक्षे प्रतिदिनं श्राद्धं कुर्य्यात्—इति विधिः प्रतिपादितः।

अश्वयुक्-शब्देन अश्विनीनक्षत्रयुक्ता पौर्णमासी यत्र मासि विद्यते, स एव आश्विनमासः। 'दिने दिने' आश्विनकृष्णपक्षीयप्रतितिथौ श्राद्धं कुर्य्यात्। श्राद्धमत्र पार्वणश्राद्धम्। पार्व्वणश्राद्धे एव श्राद्धपदस्य शक्तेः। अतः पितृ-पितामह-प्रपितामह-मातामह-प्रमातामहवृद्धप्रमातामहानां पार्व्वणविधिना प्रतिदिनं सदैव षाट्पौरुषिकं श्राद्धं करणीयं खलु। आश्विनकृष्णपक्षस्यात्र गौणचान्द्रेण विधानम्। श्राद्धादिषु गौणचान्द्रस्य

विधानवलात् मुख्यभाद्रस्य कृष्णपक्ष एव गौणाश्विनस्य कृष्णपक्षोऽभीधीयते। अत्र भागत्रये कल्पकल्पान्तरप्रदर्शनात् श्राद्धस्य नित्यत्वं प्रतीयते।

'समर्थस्य क्षेपायोगादि'ति न्यायेन प्रथमकल्पकरणसामर्थ्ये द्वितीयः कल्पो नाश्रयणीय इति।

समस्तपक्षव्यापिपार्व्वणश्राद्धकरणासामर्थ्ये तु केवलामावस्यायामपि तत् कर्त्तव्यम् पित्रुपकारत्वात्।

'पुत्रः पिण्डप्रयोजन'मिति, "पिण्डदाता हरेद्धनमिति" च शास्त्रात् पार्व्वणश्राद्धाधिकारी एव पितृदायाधिकारी स्यात्।

अत्र पितृपक्षे आकाशवर्त्तिकादानमपि विहितम्। महालयामावस्यायामपि पार्व्वणश्राद्धकरणस्यावश्यकता शास्त्रे परिदृश्यते। पार्व्वणश्राद्धविधाने अर्थाभावाद् भक्त्या दानपश्चकं केवलभोज्यदानं वावश्यमेव कर्त्तव्यम्। तत्र उल्कादानमपि करणीयम्। उल्कादाने मन्त्रो यथा—

"ॐ शस्त्राशस्त्रहतानाश्च भूतानां भूतदर्शयोः।
उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना॥"
ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
उज्ज्वलज्योतिषा दग्धास्तेऽपि यान्तु परां गतिम्।"

तत्र विसर्ज्जनमन्त्रस्तु—

"ॐ यमलोकं परित्यज्य आगता ये महालये।
उज्ज्वल-ज्योतिषा वर्त्म प्रपश्यन्तुव्रजन्तु ते॥" इति

अलमतिविस्तरेण।

# संगीत-स्तुतिः

[ निबन्धक :—श्रीइन्द्रमोहन चक्रवर्त्ती ]

ब्रह्मैव संगीतम्—नाद एव ब्रह्म, नादतः संगीतम्। ब्रह्मा हि संगीतम्—ब्रह्मण एव सृष्टिशक्तेः संगीतस्योद्भवः। विष्णुरेव संगीतम्—विष्णुः संगीतस्य पूषा। शिव एव संगीतम्: संगीतं संहृत्यैवात्मनि शिवो नादतनुः। नादतनुः शिवशङ्कर एव नृत्यवाद्यगीतमयं नटराट् संगीतं स्वयम् ॥१

संगीतवशादेव ब्रह्मा सृजति, विष्णुः पालयति, शिवः संहरति च। संगीतवशादेव सृष्टिः स्थितिः प्रलयश्च ॥२

पृथिव्येव संगीतम्—अस्याः पृथिव्या अन्तर्गूढाः प्रार्थनाः संगीतीभूय ऊर्ध्वलोकाभिमुखमुद्गच्छन्ति। उद्भिन्नाङ्कुरेषु, पत्रेषु पुष्पेषु च, मर्मरेषु कल्लोलेषु च, कण्ठेषु काकलीषु च, रूपेषु रसेषु च, गन्धेषु वर्णेषु च, शब्देषु स्पर्शेषु च, संगीतस्यैव विकाशः। जलेषु स्थलेषु च, समुद्रेषु पर्वतेषु च, मरुष्वरण्येषु च, संगीतमेव प्रतिभातम् ॥३

अन्तरीक्षमेव संगीतम्—अन्तरीक्ष एव सर्वेषां संगीतानां विस्तारः। मेघरौद्रयोः क्रीडायाम्, वर्षावारिधारायाम्, आकाशस्य नीलाभायाम्, संगीतस्यैवानुभाः। विद्युच्छिखायाम्, वैशाखस्य झञ्झाया अपरूपसज्जायाम्, संगीतमेव तरङ्गायितम् ॥४

स्वर्ग एव संगीतम्: स्वर्गो ह्येकः स्वरतरङ्गः, विश्वस्वराणां विच्छुरणभूमिः ॥५

गतिरेव संगीतम्—सर्वा गतयस्तालप्लयसंगतं संगीतम् ॥६

चैतन्यमेव संगीतम्—चैतन्यं ह्येको निरवच्छिन्न आनन्दमयः संवेदनी स्वरः ॥७

ऋगेव संगीतम्—छन्दोबद्धा ऋचः संगीतमेव। यजुरेव संगीतम्—आरोहावरोहक्रमैरेव यजुर्मन्त्राणामुच्चारणम्। सामैव संगीतम्—ऋच एव स्वरयुक्ताः सामगानेषु रूपायिताः ॥८

ओङ्कार एव संगीतम्—ओङ्कारस्य गायत्रीच्छन्दः, गायत्री छन्दोमयी ऋगेव ॥९

गायत्र्येव संगीतम्—गायत्री हि सर्वेषां संगीतानामुत्सस्वरूपिणी स्वयं-संगीतमयी विश्ववीणा,—ब्रह्मरूपा सरस्वती ॥१०

सूर्य एव संगीतम्—स्वरालोकैरेव सूर्यः प्रज्वालयति प्राणप्रदीपान्, स्वराणां तेजःप्रभावैरेव सूर्यश्छन्दयति निखिलम् ॥११

सूर्यरश्मय एव संगीतम्—सूर्यस्य सप्तरश्मय एव सप्तस्वराः। सप्तस्वरा हि सप्तलोकाः, सप्तच्छन्दःसु छन्दिताः ॥१२

चन्द्रमा एव संगीतम्—अमृतधाराभिश्चन्द्रमा एव संगीतममृतमयं करोति, औज्ज्वल्येन माधुर्येण चोज्ज्वलमधुरं करोति ॥१३

नक्षत्राण्येव संगीतम्—स्वयंसंगीता नक्षत्रपुञ्जाः स्वसंगीतैरेव स्पन्दन-शीलाः ॥१४

विश्वमेव संगीतम्—निखिलमिदं विश्वं संगीतमयम्। संगीतमेव विश्वम्, संगीतं निखिलविश्वमयम् ॥१५

तदेतत् संगीतममृतम्, सर्वेषां वरिष्ठम्। अस्य संगीतस्यैवोपासनया लभ्यत आनन्दमयोऽमृतलोकः ॥१६

एतत् संगीतं यथासीदुद्गीतं युगे युगे काले काले च, तथास्तूद्-गीतं निरन्तरं मानवकण्ठे, उत्गीतमस्तु विश्वकण्ठे विश्वकल्याणाय। पुण्योऽस्तूद्गाता, पुण्योऽस्तु श्रोता, पुण्यमस्तु पार्थिवं सर्वम्। पुण्यमस्तु भूर्भुवःस्वः ॥१७

ॐ शान्तिः शान्तिः शान्तिः ॥

———

# पूर्वपक्षः

## ( पूर्वानुवृत्तिः )

### डा० गौरीनाथशास्त्रिणा सम्पादितः

प्रतियोगित्वादसम्भवापत्तेरिति वाच्यम् साधनवन्निष्ठाभावस्य यत्-सम्बन्धावच्छिन्नप्रतियोगितावच्छेदको यो धर्मः साध्यवन्निष्ठाभावीय-तत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूततद्धर्मवत्त्वस्य विवक्षित-त्वात्। एतल्लाभार्थमेवात्यन्तपदस्योपात्तत्वादत एव धूमादिमति सतोऽप्ययोगोलकान्यत्वादेर्विशेषणान्तरविशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वा तत्राभावसत्त्वेऽपि न तस्य (क)धूमादिव्यापकत्वव्याघातः।

ननु सोपाधावपि हेतौ साध्यव्यापकसाधनाव्यापकस्योपाधे यत्-किञ्चित्सम्बन्धेनाभावसत्त्वात् तत्रानौपाधिकत्व (ख) मतिव्याप्तमत आह—(१) 'व्यभिचारेऽपी'ति। उपाधिव्यभिचारसत्त्वे चावश्यं तेन सम्बन्धेन उपाधिरित्यर्थः। तथाच साध्यव्यापकत्वे सति (ग)साधना-व्यापकस्य व्यभिचार (घ) सम्बन्धेनैवाभावोऽनौपाधिकत्वमतो नाति-प्रसङ्ग इत्याशयः। ननु साधनाव्यापकत्वं साधनवन्निष्ठाभावस्य प्रतियोगित्वम्। (२)तच्च (३)यदि तादृशाभावाधिकरणा(ङ)वृत्तित्व-

---

१ 'व्यभिचारे चेति' इति मुद्रितमणिग्रन्थे पाठान्तरं वर्तते।

२ 'तच्चेति' प्रतियोगित्वञ्चे त्यर्थः।

३ स्वरूपसम्बन्धविशेषात्मकं प्रतियोगित्वं व्यवस्थापयितुमा-शङ्कते 'यदी'ति।

---

क 'धूमादिव्यापकत्वाव्याजो नः'।

ख 'मिति व्याप्तमत आह' पाठः।

ग साध्यव्यापकस्य'।

घ 'व्यभिचारसम्बन्धेनैवाभोंऽनौपाधिकत्वमतो'।

ङ 'वृत्तित्वानियमलक्षण''।

लक्षणं तादृशाभावविरोधित्वं तदा सर्वेषामेवोपाधीनां (क) साधनवन्निष्ठस्य गगनाद्यभावस्याधिकरणवृत्तित्वान्निरुक्तप्रतियोगित्वा-सम्भव इत्यत आह—प्रतियोगित्वमिति। 'अतथात्वात्' मिथोऽप्रति-योगित्वात्, तथाच तदधिकरणावृत्तित्वस्य तत्प्रतियोगितात्वे गोत्वा-श्वत्वयोरपि मिथः प्रतियोगित्वापत्तिरिति भावः।

ननु स्वाभावात्मकस्य तस्य तदधिकरणावृत्तित्वमेव तत्प्रतियोगि-त्वं वाच्यं, तथाच गोत्वादेरश्वत्वाद्यभावानात्मकत्वात्तत्प्रतियोगित्वं नाश्वत्वादेरत आह—अन्योन्येति। एकसम्बन्धावच्छिन्ना(१)भाववति सम्बन्धान्तरेण प्रतियोगिनो वर्तमानत्वाद् येन सम्बन्धेनाभावस्तद्वति तेनैव सम्बन्धेनावृत्तित्वं वाच्यम्। तथाच घटादेस्तादात्म्यसम्बन्धा-वच्छिन्नाभाववति तत्तत्सम्बन्धेन वृत्तिमत्त्वाप्रसिद्ध्या भेदप्रतियोगि-न्युक्तलक्षणाव्याप्तिरित्यर्थः। (२) "यथाधिकरणाभावयोः स्वरूप-विशेषः सम्बन्धस्तथा" प्रतियोगित्वमनुयोगित्वमपीति। स्वरूप-विशेषः सम्बन्ध इत्यनुषज्यते। 'तथा प्रतियोग्यनुयोगित्वमपी'ति पाठे, तथा प्रतियोगित्वमनुयोगित्वमपीत्यर्थः (३)। प्रकृतोपाधित्व (ख) घटकं प्रतियोगित्वं लक्ष्यत्वेनाभिप्रेत्याह—'अभावविरहात्मत्वं'

---

१ एकसम्बन्धावच्छिन्नाभाववतीत्यस्य एकसम्बन्धावच्छिन्नप्रति-योगिताकाभाववतीत्यर्थः।

२ किन्तु यथाधिकरणाभावयोरित्यादिमूलम्। अभावतदधि-करणयोर्वैशिष्ट्यस्य स्वरूपसम्बन्धत्वे निर्विवादाद् दृष्टान्तविधया उल्लेखः।

३ अत्रापि स्वरूपविशेषसम्बन्ध इत्यनुषज्यते।

---

क 'साध्यवन्निष्ठस्य'। ख 'मधिक'।

वे'ति। तथाच साध्यवन्निष्ठस्य (१)स्वाभावस्य (क)विरहत्वानवच्छेदकीभूतो यः साधनवन्निष्ठस्य स्वाभावस्य विरहत्वावच्छेदकीभूतो धर्मस्तद्वत्त्वं दलद्वयार्थो बोध्य(२)स्तेन प्रतियोगितामात्रस्य लक्ष्यत्वे घटाद्यन्योन्याभावस्य प्रतियोगितायामव्याप्तिः, प्रतियोगितावच्छेदकधर्मस्यैव अन्योन्याभावविरहात्मकतया चिन्तामणिकारादिसम्मतत्वात्तादात्म्येन भेदविरोधिनः प्रतियोगिन एव भेदविरहत्वस्वीकारेऽपि गगनाद्यभावस्य प्रतियोगितायामव्याप्तिस्तादृशाभावस्य केवलान्वयित्वेन गगनादेस्तद्विरहत्वे प्रमाणाभावात्, अन्यथा प्रमेयत्वादिविरहत्वस्यापि तत्र स्वीकारापत्तिरिति प्रत्युक्तम्। प्रकृतनिरुक्तिघटकप्रतियोगित्वस्यैव लक्ष्यत्वेनान्योन्याभावादिप्रतियोगित्वस्यालक्ष्यतया तत्राव्याप्तावपि क्षत्य (ख)भावादिति ध्येयम्। (३) "यत्किञ्चित्साध्यव्यापके"ति (ग) न धूमादाविति तत्रापि महानसीयवह्निव्यापकस्य धूमाव्यापकस्य च पर्वतान्यत्वादेर्व्यभिचारसम्बन्धेन सत्त्वात्, तथाच

---

१ स्वाभावस्येति। अत्र स्वपदेन साध्यवन्निष्ठाभावप्रतियोगित्वेनाभिमतस्य घटादेर्ग्रहणम्।

२ साध्यवन्निष्ठस्य स्वाभावस्येत्यादिव्याख्यायाः प्रयोजनमाह—तेनेति। 'तेने'त्यस्याग्रिमप्रत्युक्तमित्यनेनान्वयः।

३ अनौपाधिकः सम्बन्धो व्याप्तिरित्याचार्यमतं प्रतिक्षेप्तुमुपक्रमते 'यत्किञ्चित् साध्यव्यापके'त्यादिना।

---

क 'विरहत्वावच्छेदकीभूतो धर्मस्तद्वत्त्वं दलद्वयार्थः'।

ख 'लक्ष्यत्वेनान्यान्याभावादित्यव्याप्तावपि क्षत्यभावादिति ध्येयम्

ग न धूमादिति।

वह्निमान् धूमादित्यादाव (१) नौपाधिकत्वाव्याप्तेरिति भावः। 'प्रकृतसाध्येति'। प्रकृतत्वं साधनेऽप्यनुषञ्जनीयम्। (२) तेन द्रव्यं विशिष्टसत्त्वादित्यादौ प्रकृतसाध्यव्यापकीभूतस्य सत्त्वादि-(क) साधनाव्यापकगुणवत्त्वादेः प्रसिद्धावपि (३) न क्षतिः। 'सिद्ध्यसिद्धिभ्यामि'ति। सद्धेतुस्थले (ख) तादृशधर्मस्या प्रसिद्धौ (ग) व्यभिचारित्वसम्बन्धेन हेताववश्यं तद्वत्त्वमप्रसिद्धं, कुत-स्तदभावो व्याप्तिः, सद्भ्यामेव प्रतियोग्यधिकरणाभ्यामभावनिरूप-णादिति भावः। उपाधित्वघटकैकदलावच्छिन्ने दलान्तरस्याभाव-वत्त्वमेवानौपाधिकत्वं वाच्यमित्याशयेन शङ्कते—'यावदिति'। साधनाव्यापकत्वं यावत्साध्यव्यापके निषिध्यते तद्वृत्त्यभावप्रति-योगित्वेन प्रमाप्यते। तथाच साध्यव्यापकयावन्निष्ठः साधनाव्यापक-त्वस्याभावोऽनौपाधिकत्वमिति पर्यवसितार्थः। धूमादिव्यापकस्य द्रव्यत्वादे र्वह्न्याद्यव्यापकत्वविरहात् सोपाधावतिव्याप्तिरतो यावत्-पदम्। "यावत्साधनाव्यापके"ति। साधनाव्यापकयावन्निष्ठः साध्यव्यापकत्वाभावोऽनौपाधिकत्वमिति फलितार्थः। 'व्यधिकरण-

१ अनौपाधिकत्वाव्याप्तेरिति। अनौपाधिकसम्बन्धो व्याप्तिरिति व्याप्तिलक्षणस्याव्याप्तिरित्यर्थः।

२ साधने प्रकृतत्वानुषङ्गस्य प्रयोजनमाह तेनेति। प्रकृतत्वञ्चात्र साधनतावच्छेदकावच्छिन्नार्थकम्।

३ न क्षतिरिति द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ ना-व्याप्तिरित्यर्थः।

क 'साधनव्यापकगुणवत्त्वादेः' पाठः।

ख 'तादृशधर्मस्य प्रसिद्धौ'।

ग 'व्यभिचारिसम्बन्धेन'।

त्वादि'ति। यस्य हेतोः पक्षधर्मत्वं ग्राह्यं सर्वत्र तद्वृत्तित्वादित्यर्थः। तेन प्रमेयत्वादेरेव पक्षधर्मतासमानाधिकरणत्वेऽपि न क्षतिः। वैयधिकरण्यं निरस्य (क) पुनराशङ्कते—'यावदि'ति। 'यत्साध्यस्ये'ति। यत्सम्बन्धिसाध्यस्येत्यर्थः। (ख) यथाश्रुते साध्यनिष्ठस्यैव धर्मस्याव्याप्त्या प्रागुक्तदोषतादवस्थ्यापत्तेरिति ध्येयम्। 'तत्' अनौपाधिकत्वम्। 'तथात्वात्' उक्तलक्षणद्वय (ग) वत्वात्। प्रथमलक्षणमभिप्रेत्याह—'साधनस्ये'ति। "प्रत्येकं" तत्तद्व्यक्तित्वेन। न च साधनाव्यापकयावदन्तर्गतस्य तत्तायः पिण्डान्यत्वादेरेव साध्याव्यापकत्वविरहान्नातिप्रसङ्गस्तत्रापि संयोगादिसम्बन्धेन तस्यापि साध्याव्यापकत्वादिति भावः। अत्रान्योन्याभावगर्भम (घ) व्यापकत्वं व्यापकत्वञ्च निवेश्य (१) यादृशसाधनवन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकं यावत् प्रकृतसाध्यसमानाधिकरणान्योन्याभावप्रति(२)योगितावच्छेदकम्, (३) यादृशसाधनवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकं यावत् प्रकृतसाध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं तादृशसाधनत्वमनौपाधिकत्वमित्यर्थे तु न कश्चिद्दोषः। प्रतियोगितावच्छेदकत्वयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषसम्बन्धावच्छिन्नत्वस्य वा विवक्षयैव अतिप्रसङ्गभङ्गादिति ध्येयम्। 'आर्द्रेन्धनम्' आर्द्रेन्धनादिकम्। अत्रापि प्रागुक्तरीत्या

---

१ अन्योन्याभावघटिताव्यापकत्वगर्भमनौपाधिकत्वं परिष्कुरुते 'यादृशेत्या'दिना।

२ 'प्रतियोगितावच्छेदक' मित्यस्याग्रिमप्रतियोगितानवच्छेदकमित्यनेनान्वयः।

३ निर्दुष्टमन्योन्याभावघटितव्यापकत्वगर्भमनौपाधिकत्वमाह 'यादृशे'ति।

---

क 'नाशङ्कते'। ख 'यथाश्रुतेन'।
ग 'द्वयत्वात्'। घ गर्भमव्यापकत्वं निवेश्य।

साध्यवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकं यावत्तादृशसाधनवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकं तादृशसाधनत्वमित्यर्थे (क) न कश्चिद्दोष इत्यपि ध्येयम्। (ख) यावदव्यभिचारियावतामव्यभिचारि। साध्याव्यभिचारित्वस्यैवेति। साध्यस्यापि निरुक्तयावदन्तर्गतत्वेन (ग) तदव्यभिचारित्वमात्रस्यानुमितिजनकता (घ) वच्छेदकतायां लाघवादिति भावः। नन्वस्तु तर्हि साध्याव्यभिचारित्वमेव गमकमत आह—'तच्चेति'। 'दूषितमिति' (ङ) केवलान्वयिन्यव्याप्त्या दूषितमित्यर्थः। लीलावतीकृदुक्तां व्याप्तिमाशङ्क्य निरस्यति—'नापीति'। 'कार्त्स्न्य' साकल्यम्, तच्च साधनस्य साध्यसम्बन्धस्य वा विशेषणं देयम्। प्रथमे 'एकव्यक्तिक' इति। तथाच जातिमान् द्रव्यत्वादित्यादावव्याप्तिः, कृत्स्नसाधनस्य तत्राप्रसिद्धेरिति भावः।

इदमुपलक्षणम्। (च) पटत्ववान् (१) पटाधेयधर्मादित्यादौ तु अतिव्याप्तिरपि द्रष्टव्या। द्वितीये नानाव्यक्तिकेऽपीति। अपिनैक-

---

१ पटाधेयधर्मादिति—पटवृत्तिधर्मादित्यर्थः। अत्र वृत्तित्वं समवायसम्बन्धेन विवक्षणीयम्, तथाहि पटसमवेतानां गुणकर्मसामान्यानां सर्वेषामेव धर्माणां साध्येन सह सामानाधिकरण्यमस्तीति भवत्यतिव्याप्तिरिति।

---

क 'क न्न दोष'।
ख 'यावदव्यभिचरति'।
ग तदव्यभिचारिमात्र।
घ 'तावच्छेदकत्वरूपायां'।
ङ 'दूषितं केवलान्वयिन्यव्याप्त्या'।
च 'घटत्ववान्'।

व्यक्तिकस्योपग्रहः ।। 'सकलधूमसम्बन्धस्येति' । सकलो यो धूमसम्बन्धस्तस्य 'प्रत्येकवह्नौ' महानसादिगतप्रत्येकवह्नावसत्त्वादित्यर्थः । तथाच धूमवान् महानसीयवह्निमत्त्वादित्यादावव्याप्तिरिति भावः । 'अतएव' एकव्यक्तिसाध्यकसद्धे तावव्याप्त्येरेव । ननु (क नानाव्यक्तिसाध्यकानुमित्युपयुक्तेयं व्याप्तिर्वक्तव्येत्यत आह—'विषमेति' । विषमव्याप्तेर्वह्निसाध्यकधूमादौ, 'तदभावात्' कृतस्नसाध्यानां सम्बन्धाभावादित्यर्थः । गुणवत् सत्त्वादित्यादावतिव्याप्तिरपि द्रष्टव्या । 'न चे'ति । यावन्तः साधनाश्रयास्तदाश्रितस्य साध्यस्य सम्बन्धः सामानाधिकरण्यमित्यर्थः । वह्न्याद्याश्रयाश्रितत्वं धूमादेरपीति तत्साध्यकवह्न्यादावतिव्याप्तेर्वारणाय यावत् पदम् । 'प्रत्येकवह्नेरि'ति । न च यावन्तः साधनाश्रयास्तत् (ख)प्रत्येकाश्रितवृत्ति यत्साध्यतावच्छेदकं तद्विशिष्टसाध्यस्य सम्बन्धविवक्षणान्नोक्तदोष इति वाच्यम् । (१)रूपत्वन्यूनवृत्तिजातिमत्त्वान् रूपादित्यादौ तथाप्यव्याप्तेः, साध्यतावच्छेदकीभूतायाः पीतत्वनीलत्वादिजातेः साधनाश्रयाणां यावतां प्रत्येकवृत्तिवृत्तित्वाभावात् । न च यावन्तः साधनाश्रया तत् प्रत्येकवृत्तिवृत्ति यद्धर्मावच्छिन्नसाध्यसम्बन्धो वाच्यः । शब्दवान् गगनत्वादित्यादौ एकमात्रव्यक्तिसाधनेऽव्याप्त्यापत्तेरिति भावः । 'नापी'ति । साधनसमानाधिकरणा यावन्तो धर्मास्तेषां समानाधिकरणं यत् साध्यं तस्य सामानाधिकरण्यमित्यर्थः । 'सकलमहानसत्वादिति ।' न च

१ रूपत्वन्यूनवृत्तित्वञ्च रूपत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति रूपत्वसामानाधिकरण्यम् ।

क व्याप्यवृत्तिसाध्यकानुवृत्त्युपयुक्तेत्युक्त व्याप्ति ।

ख काश्रितस्य साधनसम्बन्धेऽभावह्न्याद्याश्रयाश्रितत्वं वृत्तियत्साध्यतावच्छेदकं तद्विशिष्टसाध्यस्य' ।

साधनसमानाधिकरणा यावन्तो धर्मास्तत्प्रत्येकसमानाधिकरण (क)
व्यक्तिवृत्ति यत् साध्यतावच्छेदकं तद्विशिष्टसाध्यस्य सामानाधि-
करण्यन्विवक्षणान्नोक्तदोषः। रूपत्वन्यूनवृत्तिजातित्वेन साध्यताव-
च्छेदकस्थले (१) प्रागुक्तरीत्या रूपादिहेतावव्याप्त्यापत्तेः। साधन-
समानाधि (ख) करणा यावन्तो धर्माः यद्धर्मावच्छिन्नस्य साध्यस्य
समानाधिकरणास्तादृशसाध्यसामानाधिकरण्यमित्यर्थे तु न कश्चिद्दोष
इति ध्येयम्। 'नापि स्वाभाविके'ति। स्वाभाविकत्वं नानौपाधिकत्वम्,
पूर्वं दूषितत्वात्। (ग) किन्त्वन्यदेवेत्याशयेनाह—'स्वभावजन्यत्वे
तदाश्रितत्वादौ वे'ति। तदाश्रितत्वादावित्यादिना स्वभावकालीनत्वा-
द्युपग्रहः। 'अव्याप्त्यतिव्याप्ते'रिति। अव्याप्तिसहितातिव्याप्ते-
रित्यर्थः। नातः समाहारद्वन्द्वनिबन्धनं क्लीबत्वम्। (२) स्वभाव-
जन्यत्वं यदि स्वात्मकभावजन्यत्वं तदा द्रव्यं पृथिवीत्वादित्यादाव-
व्याप्तिः। साधननिष्ठस्य द्रव्यत्वादिकरणसमवेतत्वस्या (३) जन्य-
त्वादेवं धूमवान् वह्नेरित्यादावतिव्याप्तेः, वह्निनिष्ठस्य धूमाधि-
करणसंयोगित्वस्य वह्निजन्यत्वात्। स्वभावाश्रितत्वमपि यदि स्व-

---

१ साध्यतावच्छेदकीभूतनीलत्वपीतत्वादिजातीनां तत्प्रत्येकसमा-
नाधिकरणवृत्तित्वाभावादित्याशयः।

२ स्वपदेन साधनत्वेनाभिमतो ग्राह्यः।

३ समवेतत्वस्य समवायघटितत्वेन नित्यतया जन्यत्वविरहा-
दित्याशयः।

---

क 'व्यक्ति यत्साध्यतावच्छेदकं'।

ख 'करणता यावन्तो धर्माः समानाधिकरणा यद्धर्मावच्छिन्नस्य
तादृशसाध्य।

ग 'किन्त्वस्यदेवे'।

स्वरूपभावाश्रितत्वं तदा प्रमेयभावादित्यादावव्याप्तेरिति, अतिव्याप्तिश्च धूमसाध्यकवह्न्यादाविति भावः। (१)'नापी'ति। (२)साध्यं विना योऽभावः साध्याभाववत्त्वावच्छेदेन वर्तमानोऽभाव इति यावत्। तस्याभाव इत्यर्थः। साध्याभाववत्त्वावच्छेदेन वर्तमानस्याभावस्याभावत्वं व्याप्तिरिति तु(३)फलितार्थः। 'सम्बन्धमात्र'' सम्बन्धसामान्यम्। नन्वेवं स्वाभावव्यभिचारिणो घटादेरपि घटाद्यभावप्रतियोगित्वरूपः सम्बन्धो (क) व्याप्तिः स्यात्। अतस्तत्रेष्टापत्तिमाह—'व्यभिचारी'ति। व्यभिचारिनिष्ठसम्बन्धस्यापीत्यर्थः। (४)'केनचित् सहे'ति। अयमभावो घटादित्यादौ प्रतियोगित्वसम्बन्धेन हेतुतास्थल एव साधनव्यापकीभूताभावत्वादिसाध्यसामानाधिकरण्यपर्यवसितस्य प्रतियोगित्वादिसम्बन्धस्य सिद्धान्तिभिरपि व्याप्तित्वस्वीकारादित्यर्थः।

नन्वेवं धूमादिसम्बन्धवत्त्वस्याविशिष्टत्वात् पर्वतत्वादिकमेव धूमादिव्याप्यं न तु वह्न्यादीतिव्यवहारे किं नियामकमत आह—'धूमादी'ति। 'विशिष्यैवे'ति, स्वव्यापकधूमादिसामानाधिकरण्यमेव धूमादिव्याप्यताव्यवहारे नियामकं वक्तव्यमित्यर्थः। (५)'सम्बन्ध-

---

१ सौगतास्तावदविनाभावलक्षणां व्याप्तिमामनन्ति। तन्मतं निराकर्तुं शङ्कते—नापीति।

२ अविनाभावपदार्थं व्याचष्टे—साध्यं विनेत्यादिना।

३ साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति व्याप्तिलक्षणमभिप्रेत्याह फलितार्थ इति।

४ केनचित् सहेति। किञ्चिद्रूपावच्छिन्नेन सहेत्यर्थः।

५ सम्बन्धमात्रं व्याप्तिरिति लक्षणं दूषयितुं व्याप्तिपदार्थं वितर्कयति व्याप्तीतरेत्यादिना।

---

क व्याप्तः सारः।

मात्रं व्याप्ति'रित्यत्र सम्बन्धमात्रं सम्बन्धसामान्यम् . व्याप्तिपदं व्याप्तीतरभेदानुमापकपरम् . अनुमितिहेतुपरामर्शविषयपरं वा व्याप्तिपद शक्यपरं वा। (१) प्रथमे अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरिति प्रश्ने व्याप्तीतरभेदानुमापकधर्मस्याभिधानमर्थान्तरग्रस्तमित्याह—'लिङ्गपरामर्श' इति। (२ द्वितीये 'न चे'ति। "तथा"लिङ्गपरामर्शविषयः। 'तद्बोधादि'ति। पर्वतः सम्बन्धिधूमवानित्यादिनिश्चयोत्तरमनुमित्यनुत्पादस्य सर्वजनसिद्धत्वादिति भावः। (३) तृतीये 'नापी'ति। 'इदं' सम्बन्धत्वम्। केषाञ्चिन्मतमुपन्यस्यति—(क "केवलान्वयिनीति" केवलान्वयिसाध्यकहेतावित्यर्थः। 'व्यतिरेकिणि' व्यतिरेकिसाध्यकहेतौ। (ख) "व्याप्तिः" विषयविधया अनुमितिजनकतावच्छेदिका। ननु केवलान्वयिनः साध्यस्य (ग व्यतिरेकित्वग्रहाद्व्यतिरेकिणश्च साध्यस्य केवलान्वयित्वग्रहाज्जायमानायामनुमितौ व्यभिचारात् कथमेतयोः केवलान्वय्यादिसाध्यकानुमितिं प्रति विषयविधया प्रयोजकत्वमत

---

१ व्याप्तिपदस्य व्याप्तीतरभेदानुमापकपरत्वं खण्डयति—प्रथम इति।

२ सम्बन्धमात्रं व्याप्तिरित्यत्र व्याप्तिपदस्यानुमितिहेतुपरामर्शविषयपरत्वे दूषणमाह—'द्वितीय' इति।

३ व्याप्तिपदस्य व्याप्तिपदशक्यपरत्वं दूषयति—'तृतीय इति'।

---

क 'केवलान्वयिनीति' इति नास्ति।

ख 'व्याप्तिविषयतया अनुमितिजनकतावच्छेदकम्।'

ग 'वृत्तिरेकत्वग्रहाद्व्यतिरेकिणः केवलान्वयित्वग्रहाज्ञानमानायामनुमितौ व्यभिचारात् कथमेतयोः केवलान्वयादिसाध्यकानुमतिं प्रवि विषयविधया प्रयोजनत्वमत आह—'।

आह—'एतयोश्चेति'। (क) 'अनुमितिविशेषस्य जनकत्वं' प्रयोजकत्वम्। तथाच केवलान्वयित्वविशिष्टसाध्यसमानाधिकरणहेतुमत्तानिश्चयोत्तरानुमितौ (ख) केवलान्वयिसाध्यसामानाधिकरण्यम्। साध्यवदन्यावृत्तिसाधनवत्तानिश्चयोत्तरानुमितौ च साध्यवदन्यावृत्तित्वं विषयतया जनकतावच्छेदकमतो न व्यभिचार इति भावः।

नन्वेवमनुमितिसामान्यं प्रत्यनुगतप्रयोजकालाभ इत्यत आह—'अनुमितिमात्र' इति। 'पक्षधर्मता' (ग) धर्मिवृत्तिता, साध्यादिभेदेन पक्षधर्मताया अप्यननुगतत्वादतिप्रसङ्गः। पक्षधर्मताज्ञानमात्रादप्यनुमितिप्रसङ्गः। 'विशेषे'त्यस्य निरुक्तेत्यादिः। (घ) 'तथात्वात्' साध्यवत्सकलत्वावच्छिन्नभेदवत्त्वात्। ननु प्रकृतसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवदवृत्तित्वरूपं साध्यवदन्यावृत्तित्वं धूमादौ सुवचमेवात आह—'सर्वत्रेति'। केवलान्वयिसाध्यके व्यतिरेकिसाध्यके च लक्षण इत्यर्थः। तेन साधनवन्निष्ठान्योन्याभावा (ङ) प्रतियोगिसाध्यवत्कत्वमित्यत्र साध्यत्वसाधनत्वयोर्व्याप्तिनिरूप्यत्वस्य प्रागुक्तत्वेऽपि नासङ्गतिः। 'सिद्धिकर्मत्वं' यत्किञ्चिदनुमिति (१) विषयत्वम्। (च) अनुमितिसामान्यविषयत्वस्य तथात्वे तद्वदन्याप्रसिद्धेरत एवाह 'महानसीयवह्न्यादी'ति। 'तदभावात्' सिद्धिकर्मत्वाभावात्।

---

१ विषयत्वमत्र विधेयत्वरूपं ग्राह्यम्।

---

क 'अनुमितिविषयस्य जनकत्वं प्रयोजकत्वम्।'

ख 'केवलान्वयिसामानाधिकरण्यं साध्यवदन्यावृत्तिसाधिकरणवत्तानिश्चयोत्तरानुमितौ'।

ग 'धर्मवृत्तिता साध्यादिभेदेन पक्षतायां'।

घ 'तथा .... ....'। ङ 'भावं प्रति'।

च 'अनुमितिविशेष सामान्यस्य'।

इदमुपलक्षणम्। साधनत्वमपि न सिद्धिकरणत्वम् अतीतादौ लिङ्गे तदभावादित्यपि द्रष्टव्यम्। यत्तद्भूयां व्याप्तिनिरूपणे तु नैतद्दोषावकाश इति मन्तव्यम्। अनुमितिजनकतावच्छेदकधर्मस्य निश्चितत्वादनुमितिहेतुज्ञाने(क)का व्याप्तिरिति प्रश्नोऽनुचित इत्याशयेन-शङ्कते—'न चेति'।,'परस्य'(ख) प्रश्नकर्तुः। 'दूषणेन' अव्याप्त्यादिना। "असाधकताम्" उद्भावितलक्षणस्यानुमित्यनुपयोगिताम्। (१)अव्याप्यत्वादिति। हेतोरसाधकत्वादिसाध्येन व्याप्तिग्रहं विना (ग) तदनुमानासम्भवादिति भावः। अथ असाधकत्वाद्यनुमितिजनकतावच्छेदकधर्मस्य निश्चितत्वेऽपि वह्न्यनुमितिजनकतावच्छेदक २। धर्मस्य प्रश्नसम्भवादवश्यं तन्निवृत्तये वह्न्यादिव्याप्तिर्निरूपेतव्या। अन्यथा वह्न्यादिसाध्यकन्यायकथायां (घ) शिष्यादेरप्रवेशापत्तेरित्याशयेन समाधत्ते 'स्वार्थ'ति। स्वस्य स्वकीयस्य। शिष्यादेव ह्न्याद्यनुमित्युपयुक्त-व्याप्तिस्वरूपस्य निरूपणं विना शिष्यादेः (छ) न्यायकथायामप्रवेश-प्रसङ्गादित्यर्थः।

( पूर्वपक्षग्रन्थः समाप्तः )

---

१ मणिकृद्भावार्थमाह—अव्याप्यत्वादिहेतोरित्यादिना। तथाहि अयं हेतुरसाधकोऽव्याप्यत्वादित्याद्यनुमानं तदेव सम्भवेत् यदि तावद् अव्याप्यत्वहेतौ साध्यस्यासाधकत्वस्य यथार्थव्याप्तिग्रहो भवेत्। स एव तु न सम्भवति। केवलान्वयिनि अव्याप्त्यादिना व्याप्तेरेव दूषितत्वादित्यवधेयम्।

२ प्रकृतानुमितौ विषयविधया जनकतावच्छेदकधर्मस्येत्यर्थः।

---

क 'नाव्याप्तिरिति'। ख प्रभाकर्तुः। ग न तदनुमानसम्भवात्।

घ 'शिष्यादेरनिवेशापत्तेरित्याशयेन'।

ङ 'न्यायकथायामणिवेशप्रसङ्गादित्यर्थः'।

# सिद्धान्तलक्षणग्रन्थः

अव्यभिचरितसामानाधिकरण्यरूपां व्याप्तिं परिस्कृत्य समाधत्ते—'अत्रोच्यत' इति। यत्र 'भवती'त्यत्र यत्पदं यद्धर्मावच्छिन्नपरं, तथाच साध्यतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नप्रकारत्वं (क) प्रतियोग्यसमानाधिकरणस्य यत्समानाधिकरणात्यन्ताभावस्य प्रतियोगितावच्छेदकाभ्यां धर्मसम्बन्धाभ्यामवच्छिन्नं (ख) न भवति तत्र तद्धर्मावच्छिन्नसामानाधिकरण्यं तद्धेतुकतद्धर्मावच्छिन्नसाध्यकानुमितिजनकतावच्छेदकीभूताव्याप्तिरित्यर्थः। तेन वह्निमात्रस्यैव चालनीन्यायेन धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्वह्नित्वावच्छिन्नत्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः। (१) वस्तुतः (२) प्रतियोग्यसमानाधिकरणस्य यत्समानाधिकरणात्यन्ताभावस्य प्रतियोगितावच्छेदकाभ्यां धर्मसम्बन्धाभ्यामवच्छिन्नप्रकारत्वसामान्यं साध्यतावच्छेदकसम्बन्धेन (ग) यादृशधर्मावच्छिन्नं न भवतीत्येवमेवान्वयः

---

१ दण्डिमान् दण्डिसंयोगादित्यादि विशिष्टसाध्यतावच्छेदकस्थलीयसद्धेतावव्याप्तिवारणार्थमाह—'वस्तुत' इति।

२ प्रतियोग्यसमानाधिकरणस्येति। तथाहि प्रतियोग्यसमानाधिकरणस्य यत्समानाधिकरणात्यन्ताभावस्य प्रतियोगितावच्छेदकाभ्यां धर्मसम्बन्धाभ्यामवच्छिन्नप्रकारत्वसामान्यं साध्यतावच्छेदकसम्बन्धेन यादृशधर्मावच्छिन्नं न भवति तत्र तादृशधर्मावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति फलितार्थः।

---

क 'प्रतियोग्यसामानाधिकरण्यस्य'। ख 'यत्र'।

ग यादृशधर्मावच्छिन्नं सम्भवतीत्येवमेवान्वयः।

कर्तव्यस्तेन दण्डिमान् दण्डसंयोगादित्यादौ दण्डित्वाद्यवच्छिन्न-प्रकारत्वस्य निरुक्तप्रतियोगितावच्छेदकीभूताभ्यां तत्तद्दण्डरूपधर्म-संयोगसम्बन्धाभ्यामवच्छिन्नत्वेऽपि नाव्याप्तिरिति ध्येयम्।

अत्र च समवायेन कपिसंयोगत्वाद्यवच्छिन्नप्रकारतायाः साध-- समानाधिकरणस्य कपिसंयोगसामान्याभावस्य प्रतियोगिता-वच्छेदकाभ्यां कपिसंयोगत्वसमवायसम्बन्धाभ्यामवच्छिन्नत्वात् कपि-संयोगी तद्वृक्षत्वादित्यादावव्याप्तिरतः प्रतियोग्यसमानाधिकरणत्वम् क अत्यन्ताभावस्य विशेषणं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिता-वच्छेदकधर्मावच्छिन्नस्य यदधिकरणं तद्वृत्तिभिन्नार्थकम्। तेन घटादिनिष्ठस्य समवायावच्छिन्नज्ञानादिसामान्याभावस्यापि विषय-त्वादिसम्बन्धेन ख) प्रतियोगिसमानाधिकरणत्वेऽपि समवायेन ज्ञानादेः साध्यतायां द्रव्यत्वादौ गुणादिनिष्ठस्य च विशिष्टसत्तात्वाद्यवच्छिन्ना-भावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वेऽपि च विशिष्टसत्ता-साध्यकजातिमत्त्वादौ नातिप्रसङ्गः।

न च संयोगसम्बन्धेन घटाद्यभावस्यैव घटीयसंयोगादिसम्बन्धेन (ग) प्रमेयादिसाध्याभावत्वादभावमात्रस्यैव स्वप्रतियोगितावच्छेदकी-भूतप्रमेयत्वाद्यवच्छिन्नसमानाधिकरणत्वेन तदन्यत्वाप्रसिद्धिरिति वाच्यम्। हेतुसमानाधिकरणस्याभावस्य घ) स्वकीययादृशप्रति-योगितावच्छेदकावच्छिन्नसमानाधिकरणभिन्नत्वं तादृशप्रतियोगिताया अवच्छेदकीभूतधर्मसम्बन्धाभ्यामवच्छिन्नत्वस्यैव निवेश्यत्वात्। न चैवं

---

क धिकरण त्यन्ताभावविशेषणं।

ख 'प्रतियोगिसमानत्वेऽपि'।

ग 'प्रमेयादिसामानाधि[करण्या]भावत्वाभावमात्रस्यैव'।

घ 'स्वकीया'।

संयोगी सत्त्वादित्यादावतिव्याप्तिरेव, साधनाधिकरणगुणादिनिष्ठस्यापि संयोगादिसामान्याभावस्य द्रव्यादौ (क) प्रतियोगिसमानाधिकरणत्वेन तदन्यत्वाभावादिति वाच्यम्। (१) एकव्यक्तिनिष्ठस्याभावस्यापरव्यक्तिनिष्ठधर्मा (ख) समानाधिकरणत्वलक्षणविरुद्धधर्मद्वयासंभवेनाधिकरणव्यक्तीनां भेदेनाभावभेदमादृत्यैवोक्त (२) विशेषणस्योपात्तत्वात्। न (ग) चैवम(३)तिरिक्तस्याभावस्य प्रत्याश्रयं विभिन्नत्वे प्राभाकराणामधिकरणवृत्तिधर्माणाम (घ) भावत्वकल्पनैव ज्यायसीति वाच्यम्। भावभिन्नत्वप्रत्ययानुरोधेनैवातिरिक्तस्याभावस्योपेयत्वादत एव घटत्वाद्यभावस्याभावः प्रतिघटं भिन्न एव न तु घटत्वादिस्वरूपस्तस्यैकत्वेन प्रमाणसिद्धस्य (ङ) तत्तद्घटत्वसमानाधिकरणत्वतत्तद्घटत्वाभावसमानाधिकरणत्वलक्षणविरुद्धधर्मद्वयवत्त्वस्य भावभिन्नत्वप्रमाविषयत्वस्य चायोगात्। अतः समवायेन साधनवन्निष्ठस्य

---

१ एकव्यक्तिनिष्ठेति। एकव्यक्तिनिष्ठधर्मसमानाधिकरणत्वापरव्यक्तिनिष्ठधर्मासमानाधिकरणत्वरूपविरुद्धधर्मद्वयस्यात्र विवक्षितत्वात्।

२ उक्तविशेषणस्येति। प्रतियोग्यसमानाधिकरणेति विशेषणस्येत्यर्थः।

३ अतिरिक्तस्येति। अधिकरणातिरिक्तस्येत्यर्थः।

---

क 'प्रत्यादौ प्रतिसमाधिकरणत्वेन'।

ख 'धर्मि'।

ग 'न चेवमभावस्याप्यतिरिक्तस्य'।

घ 'प्रकारैरभावस्य कल्पनोपायनात्।

ङ 'तत्तद्घटत्वसमानाधिकरणत्वलक्षणविरुद्धधर्मद्वयवत्त्वस्य भावभिन्नत्वप्रमाविषयत्वस्य संयोगतः साधनविशिष्टस्य'।

घटत्वाद्यात्मकस्यसाध्याभावस्य स्वप्र तयोगिता - च्छेदकीभूतविशेषणता-सम्बन्धेन प्रतियोग्यधिकरणे कालादौ कालिकादिसम्बन्धेन वर्तमानतया प्रतियोगिसमानाधिकरणभिन्नत्वासम्भवाद् घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिः सर्वस्यैवाभावस्य प्रतियोग्यधिकरणे यथाकथञ्चित्-सम्बन्धेन वर्तमानत्वादसम्भवो वेत्यादिकमपास्तम् ।

समवायेन जातित्वावच्छिन्नप्रकारकत्वस्य तत्सम्बन्धावच्छिन्न-जातिसामान्याभावप्रतियोगितावच्छेदकाभ्यां जातित्व सम-वायसम्बन्धाभ्यामवच्छिन्नत्वाज्जातिमान् द्रव्यत्वादित्यादावव्याप्तिरतो यत्समानाधिकरणपदम् । येन रूपेण हेतुता, हेतुतावच्छेदकसम्बन्धेन क) तद्रूपावच्छिन्नाधिकरणतानिरूपितवृत्तित्व' तु तदर्थस्तेन समवायेन सत्त्वादिमति गुणादौ द्रव्यत्वादिसामान्याभावस्य समवायादिसम्बन्धेन वा धूमत्वाद्यवच्छिन्नवति धूमावयवादौ संयोगेन वह्नित्वाद्यवच्छिन्नाभावस्य सत्त्वेऽपि द्रव्यत्ववान् विशिष्टसत्त्वाद् वह्निमान् धूमादित्यादौ नाव्याप्तिः ।

(१) यदि च गुणादौ संयोगाद्यभावः (ख) संयोगसमानाधिकरणो नेति प्रतीत्या गुणाद्यवच्छेदेन संयोगाधिकरणवृत्तित्वाभावस्य संयोगानधिकरणीभूतगुणादिवृत्तित्वस्यैव वा विषयीकरणाद् गुणादिनिष्ठस्य संयोगाद्यभावस्य (ग) स्वप्रतियोगिसमानाधिकरणभिन्नत्वमित्यादिकं

---

१ संयोगी सत्त्वादित्यत्राधिकरणभेदेनाभावभेदानङ्गीकारपक्षेऽपि प्रकारान्तरेण संयोगसामान्याभावस्य प्रतियोग्यसमानाधिकरणत्वं साधयितुमामाशङ्कते— यदि चेति ।

---

क 'तद्रूपावच्छिन्नाधिकरणतावच्छिन्नत्वं' ।

ख 'संयोगेऽपि समानाधिकरणो नेति प्रतीत्या' ।

ग 'स प्रतियोगि' ।

विभाव्यते तदा प्रतियोग्यसमानाधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वम्। तच्च यत्समानाधिकरणेत्यत्र यत्पदार्थस्य प्रकृतहेतोर्विशेषणं, तथाच (क) निरुक्तप्रतियोग्यधिकरणवृत्तित्वविशिष्टस्य यद्रूपावच्छिन्नस्याधिकरणे वर्तमानाभावप्रतियोगितावच्छेदकाभ्यां धर्मसम्बन्धाभ्यामनवच्छिन्नं साध्यतावच्छेदकसंसर्गकयद्धर्मावच्छिन्नप्रकारत्वं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोऽर्थः। तेन घटत्वादेरेव स्वाभावविरहत्वाभ्युपगमेऽपि घटत्वाभाववान् द्रव्यत्वादित्यादौ नातिव्याप्तिः। न च प्रतियोगिव्यधिकरणत्वस्य हेतुविशेषणत्वे संयोगी सत्त्वादित्यादावतिव्याप्तिखण्डकस्य कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इत्यग्रिमग्रन्थस्य विरोधस्तेन हेतुसमानाधिकरणेऽभाव एव प्रतियोगिव्यधिकरणत्वस्य प्रतिपादनादिति वाच्यम्। संयोगी संयोगाभाववत्त्वादित्येवं संयोगाभावरूपासद्धेतुवारणाभिप्रायेणैव तद्ग्रन्थसङ्गमनात्। (१) न च धूमवानिति प्रतीतेर्धूमादिप्रतियोगिकाधिकरणत्वेनैवोपपत्तावधिकरणतायां धूमत्वाद्यवच्छिन्नत्वविरहात्तादृप्येण धूमादेर्हेतुतायाम-

---

१ द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ सत्त्वाधिकरणवृत्त्यभावमादायाव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नसामानाधिकरण्यं लक्षणघटकाभावेऽवश्यमेव निवेशनीयम्। तथाच सति वह्निमान् धूमादित्यादावव्याप्तिः। तत्तद्धूमत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताव्यक्तिभिरेव धूमवानित्यादिप्रतीत्युपपत्तिसम्भवे धूमत्वादिसामान्यधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतायां प्रमाणाभावेन तथाविधाधिकरणताया अप्रसिद्धेरित्यभिप्रायेणाशङ्कते—'नचे'त्यादिना।

---

क निरुक्तप्रतियोग्यधिकरणवृत्तित्वविशिष्टस्य'।

व्याप्तिरिति वाच्यम्। (१)तत्तत्क्षणवृत्तित्वादिविशिष्टधूमत्वाद्यवच्छिन्ना-धिकरणताया एव धूमत्वाद्यवच्छिन्ननिरूपित्वेन तादृशाधिकरणतामादायैव तत्र लक्षणस्य नेयत्वात(२)हेतुतावच्छेदकमात्रावच्छिन्नाधिकरणत्वस्य गौरवेणानुपादेयत्वादिति ब्रूमः। संयोगेन वह्नित्वावच्छिन्नप्रकारत्वस्यापि समवायावच्छिन्नवह्निसामान्याभावप्रतियोगितावच्छेदकीभूतधर्मेण संयोगसम्बन्धावच्छिन्नघटाद्यभावप्रतियोगितावच्छेदकसम्बन्धेन चावच्छिन्नत्वाद्वह्निसाध्यकधूमादावव्याप्तिरतः प्रतियोगितावच्छेदकीभूतयोर्धर्मसम्बन्धयोर्द्वयोरुपादानम्। न च धनी द्रव्यत्वादित्यादौ स्वामित्वादिसम्बन्धेन धनादेः साध्यतायामतिव्याप्तिः वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वनियमेन (३) तत्सम्बन्धावच्छिन्न-

---

१ समाधत्ते—'तत्तत्क्षणवृत्तित्वा ी'त्यादि। तथाहि तत्क्षणवृत्तिधूमवान् एतत्क्षणः, एतत्क्षणवृत्तिधूमवान् तत्क्षण इत्यादिप्रतीतेर्वारणाय तत्तत्क्षणवृत्तित्वविशिष्टधूमत्वाद्यवच्छिन्ननिरूपकतानिरूपिताधिकरणत्वमवश्यमभ्युपगन्तव्यम्। एवञ्च वह्निमान् धूमादित्यादौ तत्तत्क्षणवृत्तित्वविशिष्टधूमत्वाद्यवच्छिन्नाधिकरणतामादायैव लक्षणसमन्वयसम्भवेन वह्निमान् धूमादित्यादौ नाव्याप्तिरित्यवधेयम्। अत्र तत्तत्क्षणवृत्तित्ववैशिष्ट्यं स्वाधिकरणवृत्तित्वसम्बन्धेन ग्राह्यम्।

२ 'हेतुतावच्छेदकमात्रे'ति। अत्र द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ अव्याप्तेर्वारणाय निरूपकतावच्छेदकतायां न्यूनवारकपर्याप्तिर्निवेशनीया न पुनरितरवारकपर्याप्तिरित्याशयः।

३ 'तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धे'रिति। एतत्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यस्य निवेशमभिप्रेत्य, तथाच समवायसम्बन्धेन धनं नास्तीत्यभावमादाय धनी द्रव्यत्वादित्यत्र भवत्यतिव्याप्तिः।

प्रतियोगित्वाप्रसिद्धेरिति वाच्यम्। (१) तादृशनियमे प्रमाणाभावात्। (२) उक्तास्वरसेनैवान्योन्याभावगर्भनिरुक्तेर्वक्ष्यमाणत्वाद्वा।

यत्तु, यद्धर्मावच्छिन्नं प्रकारत्वं साध्यतावच्छेदकसम्बन्धेन निरुक्तप्रतियोगिव्यधिकरणस्य हेतुमन्निष्ठाभावस्य प्रतियोगितावच्छेदकधर्मावच्छिन्नं न भवति तद्धर्मावच्छिन्नसामानाधिकरण्यमर्थः। तथाच स्वामित्वादिसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि तत्सम्बन्धेन प्रतियोग्यसमानाधिकरणस्य सम्बन्धान्तरेण (क) धनत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकीभूतधर्मानवच्छेद्यतायाः (ख) साध्यतावच्छेदकीभूतधनत्वावच्छिन्नप्रकारतायामसत्त्वादेव (ग) नोक्तातिव्याप्तिरित्यस्माभिः प्रकारान्तरमुक्तम्। तन्न युक्तम। घटवान् महाकालत्वादित्यादौ कालिकसम्बन्धेन घटादेः शब्दवान् गगनत्वादित्यादौ च गगनानुयोगिकसमवायेन शब्दादेः साध्यतायामव्याप्त्यापत्तेस्तादृशसम्बन्धेन प्रतियोग्यसमानाधिकरणस्य हेतुमन्निष्टाभावस्याप्रसिद्धेः। न च धूमवन्निष्ठस्य वह्निजलोभयत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेकीभूतं यद्वह्नित्वं तदवच्छेद्यत्वाभावस्य

---

१ "तादृशनियमे" इति। वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वमेवेति नियमे इत्यर्थः।

२ उक्तास्वरसेनैवे'ति। धनो द्रव्यत्वादित्यादावतिव्याप्तिदोषेनैवेत्यर्थः।

---

क तद्धनत्वावच्छिन्ना।

ख धर्मावच्छेद्यतायाः।

ग नोक्ताव्याप्तिः।

वह्नित्वावच्छिन्नप्रकारतायामसत्त्वादव्याप्तिः, (१) वह्नित्व (क)जलत्वोभयत्वानां त्रयाणामेव तादृशाभावप्रतियोगितावच्छेदकत्वादिति वाच्यम्। साध्यतावच्छेदक (२) तदितरोभयानवच्छिन्नप्रतियोगिताया एव लक्षणघटकत्वादतएव विशिष्टवह्नित्वाद्यवच्छिन्नाभावस्य प्रतियोगितामादायापि नोक्तदोषस्यावकाशः।

अथ प्रमेयधूमवान् धूमाभिन्नद्रव्यवान् वा वह्नेरित्यादावुक्तलक्षणस्यातिव्याप्तिः, प्रमेयधूमत्वाद्यवच्छिन्नप्रकारतायाः साधनवन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधर्मानवच्छेद्यत्वेन तादृशधर्मसम्बन्धोभयानवच्छेद्यत्वस्य तत्र सत्त्वात्। धूमत्वापेक्षया गुरुत्वेन प्रमेयधूमत्वधूमाभिन्नद्रव्यत्वादेः प्रतियोगितानवच्छेदकत्वादितिचेन्न।

---

१ वह्निजलोभयाभावनिरूपितायाः प्रतियोगिताया वह्नित्वमात्रावच्छिन्नत्वे वह्निमति महानसादौ तादृशोभयाभावप्रतीति र्न स्यात्। जलत्वमात्रावच्छिन्नत्वे च जलवति ह्रदादौ तादृशप्रतीति र्न स्यात्। केवलोभयत्वावच्छिन्नत्वे च घटपटोभयवति वह्निजलोभयं नास्तीति प्रतीति र्न भवितुमर्हति। अत उक्तं 'वह्नित्वजलत्वोभयत्वाना'मिति।

२ अत्र तत्पदेन साध्यतावच्छेदकधर्मो ग्राह्य। न च प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिः। साध्यतावच्छेदकीभूतप्रमेयेतरधर्मस्याप्रसिद्धे रिति वाच्यम्। प्रमेयत्वादिविशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपकप्रकारतावच्छेदकधर्म एव साध्यतावच्छेदकेतरपदेन विवक्षितत्वान्न तत्राव्याप्तिरिति ध्येयम्।

---

क ह्रदत्व।

(१) धूमो नास्तीति प्रतीत्या धूमत्वादेरिव प्रमेयधूमो नास्तीत्यादिप्रतीत्या प्रमेयधूमत्वादेरपि प्रतियोगितावच्छेदकत्वस्य प्रमाणसिद्धत्वात् लघु (क) धर्मस्यावच्छेदकत्वसम्भवे गुरो र्न प्रतियोगितावच्छेदकत्वमित्यादिप्रवादस्य गाथामात्रत्वात्। अन्यथा लघुधर्मस्यावच्छेदकत्वसम्भवे गुरोर्नावच्छेदकत्वमित्यभिधाय तथाविधगुरुधर्माणां प्रकारत्वाद्यनवच्छेदकत्वमपि किन्न रोचयेत्। (२) अस्तु वा यद्धर्मावच्छिन्नत्वं परित्यज्य यद्धर्मावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकीभूतस्वावच्छिन्नविशिष्टताकधर्मावच्छिन्नत्वमेव विशेषणमतो गुरुधर्मस्य प्रतियोगितानवच्छेकत्वेऽपि नोक्तदोष इत्यास्तां विस्तरः।

ननु धूमवन्निष्ठस्य वह्निविशेषाभावस्य तत्तद्वह्नित्वावच्छिन्नं यत्प्रतियोगित्वं तदेव यदि वह्नित्वावच्छिन्नमपि तदा तदवच्छेदकाभ्यां वह्नित्वसंयोगसम्बन्धाभ्यां संयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताया अवच्छेद्यत्वाद्वह्निमान् धूमादित्यादावव्याप्तिः साधनवन्निष्ठाभावो यादृशप्रतियोगिताया अवच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नासमानाधिकरणस्तादृशप्रतियोगिताया एव लक्षणघटकत्वादन्यथा प्रतियोगितामात्रस्यैव

---

१ कम्बुग्रीवादिमान्नास्तीत्यादिस्वारसिकप्रतीतिबलेन गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वमनुभवसिद्धमिति नव्यमतमाश्रित्य समाधत्ते—'धूमो नास्तीतीत्यादिना।'

२ लघुधर्मे अवच्छेदकत्वे सम्भवति गुरुधर्मस्य न प्रतियोगितावच्छेदकत्वमिति प्राचीनसिद्धान्तमनुसृत्य पारिभाषिकावच्छेदकत्वं निवेशयति—'अस्तु वे'त्यादिना।

---

क लघुसम्भवे।

सामान्यविशेषोभयधर्मावच्छेद्यत्वेन प्रतियोगिसमानाधिकरणस्यैवाभावस्य (क) दुर्लभत्वा (१) पत्तेरत आह—'अन्यनिष्ठेति'। 'न वह्नित्वेनावच्छिद्यत' इति। प्रमाणाभावादितिशेषः। ननु धूमवन्निष्ठो वह्निविशेषस्याभावो वह्नित्वावच्छिन्नप्रतियोगिताक(२)स्तथात्वे बाधकशून्यत्वादित्याद्यनुमानमेव तत्र प्रमाणमत आह—'धूमवति वह्निर्नास्तीत्यप्रतीते'रिति। इति सिद्धान्तलक्षणमयूखः॥

## सामान्याभावमयूखः

सामान्यावच्छिन्न(ख) प्रतियोगिताकाभावः पृथगेवेति। सामान्याधर्मावच्छिन्नप्रतियोगिताकाभावो विशिष्टाभावतोऽतिरिक्त एवेत्यर्थः। स चाधिकरणभेदेनाभावभेदस्याभ्युपगमे विशेषाभावकूटवन्निष्ठ एव विशेषाभावस्तदनभ्युपगमे तु ततोऽप्यतिरिक्तः। समुद्रादिनिष्ठस्य वह्निविशेषाभावस्य पर्वतादिवृत्तित्वेन तस्य वह्नित्वावच्छिन्नप्रतियोगिताकत्वे धूमवति वह्नित्वावच्छिन्नाभावोऽस्तीतिप्रतीते दुर्वारतापत्तेः। एतेन प्रत्येकाभाव एव सामान्यानधिकरणदेशावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं विशेषाभावकूट एव वा सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं पर्याप्तमित्युक्तावपि

---

१ 'दुर्लभत्वापत्तेरिति'। प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतया साधनात्यन्ताभावस्य विरोधादिति भावः

२ 'तथात्वे' इति। वह्निमत्पर्वतादिनिष्ठस्य महानसीयवह्न्याद्यभावस्य वह्नित्वादिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्व इति तदर्थः।

---

क दुर्मिलत्वापत्तेः। ख सामान्यावच्छिन्नेत्यादि अतिरिक्त।

न निस्तारः। तत्रापि धूमवति वह्निर्नास्तीति प्रत्ययस्य दुर्वारतापत्तेः। (१) प्रथमे गुणान्यत्वविशिष्टसत्ताया गुणवृत्तित्ववद्वह्नित्वावच्छिन्नप्रतियोगिताकस्य विशेषाभावस्य धूमवद्वृत्तिताया अनपायात्। (२) द्वितीये पर्वतत्वमहानसत्वोभयस्य द्रव्यवृत्तितावद्वह्नित्वावच्छिन्नप्रतियोगिताकत्वपर्याप्त्यधिकरणाभावकूटस्यापि धूमवद्वृत्तिताया अक्षतत्वादिति ध्येयम्।

(३) अथानुगतधर्मस्य प्रतियोगितानवच्छेदकत्वनियमाद्वह्निर्नास्तीत्यादिप्रतीत्या वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंसर्गेण वह्न्यादिमत्त्वं नाभावस्य गृह्यते परन्तु वह्निप्रतियोगिकाभावकूटवद्वृत्तित्वसम्बन्धेनैव वह्न्यादिमत्त्वमभावस्य विषयीक्रियते। सर्वत्रैवान्वयितावच्छेदकधर्मवत्प्रतियोगिकाभावकूटवद्वृत्तित्वसम्बन्धेन नञः स्वार्थधर्मिकान्वयितावच्छेदकधर्मावच्छिन्नवत्त्वधीजनकत्वस्य व्युत्पन्नत्वात्। अन्यथा अन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वसंसर्गेण नञन्ताद्बोधजनकत्वे कम्बुग्रीवादिमान्नास्तीत्यादिशाब्दबुद्धेरप्रमात्वापत्तेः घटत्वापेक्षया गुरुत्वेन कम्बुग्रीवादिमत्त्वस्य तन्मतेऽपि प्रतियोगितानवच्छेदकत्वात्। तथाचाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वोक्तिरसङ्गतैवेत्यत आह—'अन्यथे'ति। प्रतियोगितायाः सामान्यधर्मानवच्छेद्यत्व इत्यर्थः। अत्यन्ताभावस्य

---

१ प्रत्येकाभाव एव सामान्यानधिकरणदेशावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमिति प्रथमकल्पं दूषयति प्रथम इत्यादिना।

२ विशेषाभावकूट एव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं पर्याप्तमिति द्वितीयकल्पं दूषयति—द्वितीय इत्यादिना।

३ अन्यथेत्यादिमूलसन्दर्भमुत्थापयितुं भूमिकां रचयति—'अथे'त्यादिना।

सामान्यधर्मावच्छेद्यत्वं व्यवस्थापयितुमाह—'सकलप्रसिद्धे'त्यादि। (१) स्पर्शादौ प्रसिद्धं (२) यद्रूपं वायुवृत्तित्वस्वरूपं तस्य सकलस्यैवाभावेऽवगत एवेत्यर्थः। वायौ रूपं न वेति संशयो न स्यादिति परेणान्वयः। रूपं वायुवृत्ति न वेति संशयो न स्यादिति च तदर्थः। अन्योन्याभावप्रतियोगितायाः सामान्यधर्मावच्छेद्यत्वं व्यवस्थापयितुमाह 'प्रसिद्धरूपव'दिति। प्रसिद्धानां पार्थिवादिरूपाणां प्रत्येकवदन्यत्वे चाधिगत इत्यर्थः। 'विशेषाभावकूटस्ये'ति। सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्यासत्त्वे वायुवृत्तित्वादिविशिष्टबुद्धिं प्रति वायुवृत्तित्वादिप्रतियोगिताकाभावकूटवत्त्वादिनिश्चयस्यैव बाधनिश्चयविधया विरोधितायाः वक्तव्यत्वेन (३) प्रकृतस्थलेऽपि तस्य सत्त्वादिति भावः। न च वायुवृत्तित्वादिविशिष्टबुद्धिं प्रति वायुवृत्तित्वादिप्रतियोगिताकाभावकूटवद्वृत्तित्वसम्बन्धेन (क) वायुवृत्तित्वत्वादिमात्रावच्छिन्नप्रकारताक एवाभावस्य निश्चयो विरोधी। (ख) स च न प्रकृते, रूपं वायुवृत्तित्वाभाववदित्याकारकनिश्चयस्यैव (४) तथात्वाद्वायवीयतत्तद्वृत्तिताभाववदित्यादिनिश्चयस्य वायुवृत्तित्वा-

१ 'सकलप्रसिद्धरूपाभावे' इति मूलसन्दर्भं व्याचष्टे—'स्पर्शादा'वित्यादिना।

२ 'प्रसिद्धरूपाभावे' इत्यत्र रूपपदं न गुणविशेषपरमपितु वृत्तित्वरूपमित्याशयेन व्याचष्टे—यद्रूपं वायुवृत्तित्वस्वरूपमिति।

३ 'प्रकृतस्थलेऽपी'ति। वायौ रूपं नास्तीत्यादिस्थलेऽपीत्यर्थः।

४ 'तथात्वा'दिति। वायौ रूपं नवेत्यादिसंशयविरोधित्वादित्यर्थः।

क वायुवृत्तित्वादिमात्रावच्छिन्न।
ख न च।

तिरिक्तेन तत्तद्द्रव्यक्तित्वेनावच्छिन्नप्रकारताकतया तथात्वविरहादिति वाच्यम्। तादृश्येण बाधबुद्धेर्विरोधित्वकल्पनायां गौरवादन्यथा तत्तद्द्रव्यक्तित्वावच्छिन्नं प्रत्यपि तत्तद्द्रव्यक्तिप्रतियोगिताकत्वसम्बन्धेन तत्तद्द्रव्यक्तित्वमात्रावच्छिन्नप्रकारताकस्यैवाभावनिश्चयस्य विरोधित्वसम्भवाद्विशेषधर्माणामपि प्रतियोगितावच्छेदकत्वहान्यापत्तेस्तद्द्रव्यक्तिर्नास्तीति प्रतीत्या तद्द्रव्यक्तित्वस्येव वह्निर्नास्तीत्यादि प्रतीत्यापि वह्नित्वादेः प्रतियोगितावच्छेदकत्वावगाहनस्य सर्वजनानुभवसिद्धत्वाच्चेति भावः।

॥ इति सामान्याभावग्रन्थः समाप्तः ॥

## विशेषव्याप्तिः

पर्वतो वह्निमानित्याद्यवच्छिन्नसाध्यकानुमित्युपयुक्तां व्याप्तिमभिधाय पर्वतो द्रव्यमित्यादि (१) निरवच्छिन्नद्रव्यत्वादिसाध्यकानुमित्युपयुक्तां व्याप्तिमाह—'यद्वेति' न च पर्वतो (क) द्रव्यमित्याद्यनुमितिः तादात्म्यसम्बन्धेन द्रव्यत्वावच्छिन्नद्रव्यादि (ख) साध्यिकैवेति वाच्यम्। तादृशसम्बन्धेन व्याप्यव्यापकभावस्य प्राच्यैर-

---

१ निरवच्छिन्नद्रव्यत्वादीति। अविशिष्टद्रव्यत्वादीत्यर्थः। आदिपदेन घटःप्रमेयोवाच्यत्वादित्यादिस्थलीय शुद्धप्रमेयत्वादिसाध्यपरिग्रहः।

---

क 'द्वह्निमित्याद्यनुमितिः।

ख '० साध्यकैवेति'।

स्वीकारात्। (१) तथाविधानुमित्युत्तरं पर्वते द्रव्यत्वमनुमिनोमीत्यनुव्यवसायस्य भ्रमत्वापत्तेरिति ध्येयम्। 'प्रतियोगी'त्यादि। स्वं—प्रकृतसाधनम्। (२) तथाच प्रतियोग्यसमानाधिकरणस्य प्रकृतसाधनवन्निष्ठात्यन्ताभावस्याप्रतियोगिनी या व्यक्तिः प्रकृतसाधनस्य तद्व्यक्तिसामानाधिकरण्यं प्रकृतहेतुकनिरवच्छिन्नतद्व्यक्तिसाध्यानुमित्युपयुक्ता व्याप्तिरित्यर्थः। पर्वतो नीलद्रव्यमित्याद्यनुमितिस्तु तादात्म्येन नीलद्रव्यत्वावच्छिन्न (क) साध्यिकैव पर्वतादौ ख)नीलान्यद्रव्यस्य भेदधीसहकृतादेव वा द्रव्यत्वस्य निरुक्तव्याप्तिज्ञानादिति हृदयम्। अत्र साधनवति (ग) नीलान्यत्वविशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वा द्रव्यत्वादेरत्यन्ताभावसत्त्वात् द्रव्यं पृथिवीत्वादित्यादावसम्भवस्य वारणार्थमसमानाधिकरणान्तं साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोग्यधिकरणं तद्वृत्तिभिन्नत्वं तदर्थः। (३) तेन द्रव्यं (घ)कालत्वादित्यादौ समवायेन साध्यतायामसङ्केतौ साधनवन्निष्ठस्य समवाया-

---

१ तादात्म्यसम्बन्धेन व्याप्यव्यापकभावोपगमेऽपि दूषणमाह—'तथाविधे'ति।

२ यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यमिति लक्षणं व्याचष्टे—'तथाच प्रतियोग्यसमानाधिकरणे'त्यादिना।

३ अत्र द्रव्यं कालत्वादित्यादौ क्रियाद्यात्मककालाभिप्रायेण अतिव्याप्तिमाशङ्क्य तन्निरस्यति—तेनेत्यादिना।

---

क '० साध्यकैव'।

ख पर्वतादौ द्रव्यस्य।

ग 'नीलान्यत्वं शिष्टस्य'।

घ 'कालत्वादित्या'।

वच्छिन्नद्रव्यत्वाभावस्यापि कालिकसम्बन्धेन यत्प्रतियोग्यधिकरणं तद्वृत्तित्वेऽपि नातिव्याप्तिः। न चैवं संशयो ज्ञानत्वादित्यादावति-व्याप्तिः। वैजात्यरूपस्य (१) विषयताप्रभेदस्य वा (क) संशयत्वस्या-व्याप्यवृत्तित्वेन तदभावस्य प्रतियोगिसमानाधिकरणभिन्नत्वाभावा-दिति वाच्यम्। एतस्यापि (ख) विशेषणस्याधिकरणभेदेनाभावभेद-मङ्गीकृत्यैव निवेशितत्वात् साध्यतावच्छेदकसम्बन्धेन (ग) यत्प्रति-योग्यनधिकरणं हेत्वधिकरणं तद्वृत्त्यभावस्यैव (घ) वात्यन्ताभाव-पर्यन्तदलेन विवक्षायामुक्तदोषस्याप्रसक्तिसम्भवाच्च। न चैवमपि द्रव्यं घटवन्महाकालत्वात् सर्वं विषयकत्वाद्वेत्यादौ कालिकेन विषयित्वेन वा सम्बन्धेन साध्यतायामव्याप्तिस्तादृशसम्बन्धेन प्रतियोग्यधिकरणी-भूतहेतुमतोऽप्रसिद्धेरिति वाच्यम्। एतेनैवास्वरसेन निरवच्छिन्न-साध्यकानुमित्युपयुक्तस्यान्योन्याभावगर्भव्याप्त्यन्तरस्याग्रे वक्ष्यमाण-त्वात्। न च रूपवान् पृथिवीत्वादित्यादावव्याप्तिः। सर्वस्या एव रूपव्यक्तेर्निरुक्ताभावप्रतियोगित्वादिति वाच्यम्। उक्तव्याप्तेः शुद्ध-साध्यकानुमित्युपयुक्तव्याप्तित्वेन रूपत्वाद्यवच्छिन्नसाध्यकहेतोस्तद-लक्ष्यत्वादत एव (२) विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरपि

---

१ संशयत्वस्यांशिकत्वेन यदि वैजात्यरूपता न स्वीक्रियते तदाप्याह 'विषयताप्रभेदस्य'वेति कोटिताख्य विषयताविशेषस्येति तदर्थः।

२ अत एवेति। उक्त व्याप्तेःशुद्धसाध्यकानुमित्युपयुक्तत्वा-देवेत्यर्थः।

---

क 'चासंशयत्वं'।

ख 'विशेषणस्याधिकरणाभेदेनाभावभेदमङ्गीकृत्यैव'।

ग प्रतियोग्यनधिकरण, तद्वृत्यभाव।

घ 'वात्यन्ताभावपर्यन्तविशेन विपक्षामुक्तदोषस्यासक्तिसम्भवाच्च'।

प्रत्युक्ता। निरवच्छिन्नसत्तादिसाध्यकव्याप्तेर्जात्यादाविष्टत्वादुक्त-निरुक्तेः साध्यतावच्छेदकाघटितत्वेन तादृशविशिष्टसत्तात्वाद्यवच्छिन्न-साध्यकतादृशव्याप्तेरशक्यत्वेना (क) पादयितुमशक्यत्वाच्च। न च तद्वह्निमान् तद्धूमादित्यादावप्युक्तव्याप्तिसत्त्वात् (१) स्वरूपतस्तद्विधेय-कानुमित्यापत्तिरिति वाच्यम्। जातीतरस्य निरवच्छिन्नप्रकारत्व-सहिष्णुतायामिष्टत्वात्। अत एव मणिकृदेवाग्रे वक्ष्यति व्यधि-करणयो र्वह्निधूमयो र्न व्याप्तिः किन्तु समानाधिकरणतद्वह्नितद्धूमयो-रेवेति। (२)वस्तुतस्तादृशानुमित्यप्रसिद्धे र(३) तदन्तर्भावेन व्याप्ति-ज्ञानानुमित्योः कार्यकारणभावकल्पनान्निरवच्छिन्नप्रकारताशालिनामेव (ग) द्रव्यत्वसत्त्वादिसाध्यानामुक्त (घ) निरुक्तौ निवेश्यत्वा (४) न्नोक्त-दोष इति युक्तमुत्पश्यामः। न च यद्धर्मावच्छिन्नाधिकरणतानिरूपित-दैशिकविशेषणतासम्बन्धेन यदभावप्रतियोग्यधिकरणत्वस्य सामान्या-भाववत्त्वं हेतुमतस्तदभावप्रतियोगित्वशून्यवृत्तितद्धर्मेणावच्छिन्नस्य

---

१ स्वरूपत इति। शुद्धतद्वह्निविधेयकानुमित्यापत्तिरित्यर्थः।

२ स्वसिद्धान्तमाह—'वस्तुतस्त्व'त्यादिना।

३ अतदन्तर्भावेनेति। अविशिष्टसाध्यान्तर्भावेनेत्यर्थः।

४ नोक्तदोष इति। तथाच तद्वह्निमान् तद्धूमादित्यादिविशिष्ट-साध्यकसद्धेतोरलक्ष्यत्वेन तत्र लक्षणासङ्गतिरिष्टैवेति भावः।

---

क '० पादयितु कार्यत्वाच्च'।

ख 'स्वरूपतद्वद्विधेयकां'।

ग 'द्रव्यत्वमत्त्वादि'।

घ 'निरुक्तो'।

सामानाधिकरण्यं व्याप्तिरित्यर्थकरणादेव सर्वत्रावच्छिन्नसाध्यकहेतूनामुपग्रहसम्भवे निरवच्छिन्नसाध्यकानुमितेस्तदुपयुक्तव्याप्तेश्चोपवर्णनमयुक्तमिति वाच्यम्। गुणान्यत्वविशिष्टसत्ताभावस्यापि निरुक्तप्रतियोगितात्वात्तच्छून्यवृत्तित्वस्य च साध्यतावच्छेदकीभूतविशिष्टसत्तात्वे विरहात्तदवच्छिन्नसाध्यकद्रव्यत्वादिहेतावव्याप्ते (१) रुक्तरीत्यापि दुरुद्धरत्वापत्तेरिति दिक्।

अवच्छिन्नसाध्यकानुमित्युपयुक्तस्य (क) प्रागुक्त(२)लक्षणस्य स्वामित्वादिसम्बन्धेन धनादेः साध्यतायां द्रव्यत्वादिहेतावति व्याप्तेस्तादृशसम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वादित्यवच्छिन्नसाध्यकानुमित्युपयुक्तव्याप्त्यन्तरमाह— 'यत्समाने'ति। यत्पदं (३) प्रकृतहेतुपरम्। यद्वदित्यपि यद्धर्मावच्छिन्न-

---

१ 'उक्तरीत्यापी'ति। यद्धर्मावच्छिन्नाधिकरणतानिरूपित इत्यादिरीत्यापीत्यर्थः।

२ प्रागुक्तलक्षणस्येति। प्रतियोग्यसमानाधिकरण यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरितिलक्षणमित्यर्थः।

३ प्रकृतहेतुपरमिति। प्रकृतहेतुतावच्छेदकावच्छिन्नपरमित्यर्थः। तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ सत्त्वाद्यधिकरणगुणादिवृत्त्यन्योन्याभावस्य प्रतियोगित्वेऽपि द्रव्यत्ववतो नाव्याप्तिः।

---

क 'प्रागुपलक्षणस्य'।

वदित्यर्थकम्। तथाच (१) साध्यतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नवान् प्रकृतसाधनाधिकरणीभूतप्रत्येकव्यक्तिनिष्ठान्योन्याभावप्रतियोगित्वाभाववान् (२) प्रकृतसाधनस्य तद्धर्मावच्छिन्नसामानाधिकरण्यं प्रकृतहेतुकतद्धर्मावच्छिन्नसाध्यकानुमित्युपयुक्त (३) व्याप्तिरित्यर्थः। वह्निमान् धूमादित्यादौ च साध्यवन्मात्रस्यैव चालनीन्यायेन हेतुमन्निष्ठाभावप्रतियोगित्वेऽपि हेत्वधिकरणीभूतपर्वतादिप्रत्येकनिष्ठान्योन्याभावप्रतियोगित्वाभाववती (क)पर्वतादिप्रत्येकव्यक्तिरेव साध्यतावच्छेदकीभूतवह्नित्वाद्य (ख) वच्छिन्नवती प्रसिद्धेति न तत्राव्याप्तिः। न च धूमवत्पर्वतव्यक्तिनिष्ठस्य वह्निमज्जलोभयत्वावच्छिन्नभेदस्य प्रतियोगित्वाभावो न कुत्रापि वह्निमतीत्यव्याप्तितादवस्थ्यम्। प्रकृतसाध्यत्वतदितरोभयधर्मानवच्छिन्नाया एव प्रतियोगिताया: प्रवेश्यत्वात्। न चान्योन्यपदवैयर्थ्यम्। सर्वेषामेव वह्नि

---

१ समवायसम्बन्धेन वह्निमतोऽन्योन्याभावमादाय अव्याप्तिवारणार्थं साध्यतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नवत्त्वलाभाय साध्यतावच्छेदकसम्बन्धेनेत्युक्तम्।

२ रासभादावपि तद्धर्मावच्छिन्नसामानाधिकरण्यसत्त्वेन प्रकृतसाधनसमानाधिकरणरासभवान् पर्वत इत्यादिज्ञानादपि अनुमित्यापत्तिरतस्तद्वारणाय 'प्रकृतसाधनस्ये'त्युक्तम्।

३ तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नविधेयताकानुमितेर्विषयविधया जनकतावच्छेदिकेत्यत्र व्याप्तिपदार्थः, तेन व्याप्तिपदेन न पौनरुक्त्यम्।

---

क 'पर्वतादिप्रत्येकव्याप्तिरेव'।

ख 'द्यवच्छिन्नवति'।

मतां धूमवत्पर्वतव्यक्तिनिष्ठस्य वह्निमत्त्वावच्छिन्नात्यन्ताभावस्य प्रतियोगितया तस्य वह्निसाध्यकधूमादावव्याप्तिवारकत्वात्। अन्योन्याभावस्य (क) प्रकृतसाधनवन्निष्ठत्वं साध्यतावच्छेदकसम्बन्धेन (१) (ख) स्वप्रतियोगितावच्छेदकवत्त्वबुद्धे (२)विरोधिताघटकसम्बन्धेनैव ग्राह्यम्। (३)तेन वह्निमत्त्वाद्यवच्छिन्नभेदस्य कालिकादिसम्बन्धेन धूमवत्पर्वतादिनिष्ठत्वेऽपि (४)न क्षतिः।

अत एव च मूलाद्यवच्छेदेन कपिसंयोगवत्त्वाद्यवच्छिन्नभेदस्य वृक्षादौ सत्त्वमते कपिसंयोगी तत्त्वादित्यादौ नाव्याप्तिः। निरवच्छिन्नविशेषणतासांसर्गेनैव कपिसंयोगिभिन्नत्वप्रकारकनिश्चयस्य(ग) तादृशभेदप्रतियोगितावच्छेदकीभूतकपिसंयोगवत्त्वबुद्धिं प्रति विरोधितया

---

१ 'स्वं'—प्रकृतलक्षणघटकोऽन्योन्याभावः'।

२ 'विरोधिताघटकसम्बन्धेने'ति। तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्न स्वप्रतियोगितावच्छेदकतावच्छेदकधर्मावच्छिन्नप्रकारताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धनेति समुदितार्थः। एवञ्च वह्निमान् धूमादित्यादौ तादृशेन स्वरूपसम्बन्धेनैव अन्योन्याभावस्य धूमवत्पर्वतवृत्तित्वं ग्राह्यमिति।

३ उक्तसम्बन्धनिवेशस्य प्रयोजनमाह—'तेने'ति।

४ 'न क्षतिरि'ति। नासम्भव इत्यर्थः।

---

क 'प्रकृतसाधनवन्निष्ठं तु'।

ख 'स्वप्रतियोगितावच्छेदकत्वं।'

ग 'तादृशयोगि' इत्यधिकः पाठः।

तादृशविशेषणतासम्बन्धेन कपिसंयोगवत्त्वावच्छिन्नभेदस्य साधन-वन्निष्ठत्वाभावात् सर्वत्रैवान्योन्याभावस्य निरवच्छिन्नविशेषणता-सम्बन्धेन साधनवन्निष्ठत्वं वक्तव्यमिति तु(क) रिक्तं वचः, पट-भिन्नत्वावच्छिन्नभेदात्मनः भेदावच्छिन्नभेदात्मकसाध्यवद्भेदस्य घटत्व पर्यवसन्नत्वेन तस्य विशेषणतासम्बन्धेन हेतुमन्निष्ठत्वासम्भवेन पट-भिन्नं द्रव्यत्वादित्यादौ अतिप्रसङ्गस्य दुर्वारत्वापत्तेरित्यास्तां विस्तरः।

परे तु प्रकृतलक्षणे (ख)प्रतियोगिपदं प्रतियोगित्वपरं, यत्पदञ्च यद्रूपवत्त्वावच्छिन्नार्थकम्। तथाच प्रकृतसाधनवन्निष्ठान्योन्याभाव-(१) प्रतियोगित्वसामान्यं(ग)यद्रूपवत्त्वानवच्छेद्यं साधनस्य तद्रूपा-वच्छिन्नसामानाधिकरण्यमर्थः। साधनवन्निष्ठस्य (घ)घटवत्त्वाद्य-वच्छिन्नभेदस्य प्रतियोगितायां धूमवत्त्वाद्यनवच्छेद्यत्वात् धूमवान् वह्नेरित्यादावतिव्याप्तिरतः सामान्यपदम्। (२) भेदस्याव्याप्यवृत्तित्वे प्रतियोग्यवृत्तित्वमन्योन्याभावस्य प्रतियोगिभिन्नत्वं वा हेतुमतो

१ प्रतियोगित्वसामान्यमित्यत्र सामान्यपदं सार्थकयति 'साधन-वन्निष्ठस्ये—त्यादिना।

२ मूले महीरुहो विहङ्गमसंयोगी नेति यथार्थप्रतीत्या अन्योन्या-भावस्याप्यवृत्तित्वमित्याशयेनाह—'भेदस्याव्याप्यवृत्तित्व' इति।

क 'रिक्तपदः'।

ख 'प्रतिपदं'।

ग 'यद्रुपवन्निष्ठवत्तं'।

घ 'घटत्वाद्यवच्छिन्नभेदस्य'।

विशेषणं वाच्यमतः (क) कपिसंयोगित्वादित्यादौ नाव्याप्तिः। कपिसंयोगित्वाद्यवच्छिन्नभेदस्यैव तादृशभेदप्रतियोगित्वावच्छिन्नभेदस्याप्यव्याप्यवृत्तित्वमाशङ्क्यैव चाग्रे 'न चान्योन्याभावस्याव्याप्यवृत्तित्वमि'ति ग्रन्थोऽवतारणीय (ख) इति न तद्विरोध इति प्राहुः। (१) ननु निरवच्छिन्नसाध्यकानुमित्युपयुक्तस्य प्रागुक्तात्यन्ताभावगर्भलक्षणस्य द्रव्यं महाकालत्वादित्यादौ कालिकादिसम्बन्धेन साध्यतायामव्याप्तिः। साध्यतावच्छेदकीभूततादृशसम्बन्धेन प्रतियोग्यनधिकरणत्वस्य (ग) हेतुमत्यसत्त्वादतस्तादृशानुमित्युपयुक्तामन्योन्याभावगर्भव्याप्तिमाह — 'स्वसमाने'ति। अप्रतियोगित्वं प्रतियोगितानवच्छेदकत्वम्। यद्वत्पदञ्च यद्वत्तापरम्। तथाच स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकीभूत (२) यद्व्यक्तिमत्त्वाकत्वं यस्य तस्य तदेव निरवच्छिन्नतद्व्यक्तिसाध्यकानुमित्युपयुक्तं व्याप्यत्वमित्यर्थः। (३) तेन द्रव्यत्वादिसम्भावस्यैव चालनीन्यायेन पृथिवीत्वादिमन्निष्ठान्योन्याभावप्रतियोगित्वेऽपि द्रव्यं पृथिवीत्वादित्यादौ नाव्याप्तिरखण्डधर्मस्यैकसम्बन्धेनाधिकरणताया लाघवेन धर्मिभेदेऽप्यभिन्नत्वात्। न च तथापि घटान्यत्वादिविशिष्टेन द्रव्यत्वादिमत्त्वेनावच्छिन्नप्रतियोगिताक-

---

१ स्वसमानाधिकरणान्योन्याभावेत्यादिलक्षणस्य भूमिकामारचयति—नन्वित्यादिना।

२ अत्र यद्व्यक्तिपदेन द्रव्यत्वादिनिरवच्छिन्नसाध्यव्यक्तयो धर्तव्याः।

३ यद्वदित्यस्य 'यद्वत्तार्थपरतायां प्रयोजनमाह—तेनेत्यादिना।

---

क 'कपिसंयोगवत्वादित्यादौ'। ख 'वरणीय'।

ग 'हेतुमत्वेन'।

भेदस्य हेतुमन्निष्ठस्य प्रतियोगितावच्छेदकमेव द्रव्यत्वाद्यधिकरणत्व-मित्युक्ता (क) व्याप्तितादवस्थ्यमिति वाच्यम्। प्रकृतसाध्यवत्त्व-तदितरोभयानवच्छिन्नस्यैवान्योन्याभावप्रतियोगितावच्छेदकत्वस्य नि-वेश्यत्वात्। (१) कालिकसम्बन्धेन द्रव्यत्वादेः साध्यतास्थले च तत्-सम्बन्धावच्छिन्नं यद् द्रव्यत्वाद्यधिकरणत्वं तत्र दैशिकविशेषणता-वच्छिन्नं महकालनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं नास्तीति द्रव्यं पृथिवीत्वादित्यादौ नोक्तदोषः। अत्यन्ताभावाप्रतियोगित्व-गर्भस्य अन्योन्याभावगर्भप्रकृतलक्षणस्य चावच्छिन्नसाध्यकानुमित्युप-योगित्वासम्भवं स्वयमेव दर्शयति (ख) अन्यवृत्तिवह्नीत्यादिना ना व्याप्तिरिति। न निरवच्छिन्नसाध्यकानुमित्युपयुक्तव्याप्तिरित्यर्थः। किन्त्वित्यादिकं (ग) (२) जातीतरस्यापि तत्तद्वह्नेः स्वरूपतः प्रकार-

---

१ कालिकसम्बन्धेन द्रव्यत्वसाध्यकमहाकालत्वहेतौ शङ्किताव्याप्तिं परिहरति 'कालिकसम्बन्धेनेत्यादिना'।

२ तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना सह निरवच्छिन्नसाध्यकस्थलीयव्याप्तिप्रदर्शनं मूलकृतोऽसङ्गतमेव स्यादित्याशङ्क्य समाधत्ते—'जातीतरस्यापी'त्यादिना।

जातीतरयोरपि व्यधिकरणयोर्वह्निधूमयोः स्वरूपतोभानमादत्येदम्। अन्यथा वह्नेः सावच्छिन्नसाध्यत्वेन तत्साध्यकहेतोरलक्ष्यतया तत्र व्याप्तिनिराकरणमसङ्गतमेव स्यादिति भावः।

---

क '०क्तावव्याप्तितादवस्थ्यमिति'।

ख 'अन्यवृत्तिवह्नित्वादिना'।

ग 'जाततरस्यापि'।

तामङ्गीकृत्याभिहितम्। 'न व्याप्तिरि'त्यस्य वह्नेरित्यादिः। (१) तेन द्रव्यत्वादेः सकलधूमवन्निष्ठात्यन्ताभावाप्रतियोगित्वेन धूममात्रे तत्-साध्यक (क) व्याप्तिसम्भवेऽपि न क्षतिः (२)। 'तथात्वेन' स्वस्व—व्यापकीभूततत्तद्वह्निसमानाधिकरणत्वेन।

ननु यद्व्यक्तिमन्निष्ठात्यन्ताभावाप्रतियोगित्वं यस्य तस्यैव तद्व्याप्यत्वे वह्नेरपि धूमव्याप्यता स्याद् व्यक्तिविशेषस्य तथात्वादत आह—धूमसम्बन्धीति। ननु व्यधिकरणयोर्व्याप्त्यनुगमे युगपदुत्पन्न-विनष्टयोः स्नेहगन्धयोरेकतरस्य कालिकसम्बन्धेनाश्रये वर्तमानो यस्तादृशसम्बन्धावच्छिन्नाभावस्तदप्रतियोगित्वमपरस्यास्तीति तदु-भयोर्मिथोव्याप्तिप्रसङ्ग इत्यत आह—युगपदिति। व्याप्तिरेवेति। येन सम्बन्धेन ययोर्वैयधिकरण्यं तेनैव तयाव्याप्ति (ख) र्नेष्यत इति गन्धस्नेहयोः समवायेन व्याप्त्यसत्त्वेऽपि कालिकादिसम्बन्धेन (ग) व्याप्तिरिष्यत एवेत्यर्थः। ननु प्रतियोग्यसमानाधिकरणत्वं प्रतियोग्यधिकरणवृत्तिभिन्नत्वं, तच्च यदि हेतोर्हेतुमन्निष्ठाभावस्य वा विशेषणमुभयथापि संयोगी संयोगरहितत्वादित्यादौ (घ) (३) तद्गर्भ-

---

१ न व्याप्तिरित्यस्यादौ वह्नेरितिपूरणस्य प्रयोजनमाह—'तेने'ति।

२ 'न क्षति'रिति। न मूलग्रन्थस्यासङ्गतिरित्यर्थः।

३ 'तद्गर्भे'ति। प्रतियोग्यसामानाधिकरण्यघटितस्येत्यर्थः।

---

क 'तत्साध्यकव्याप्तिरेव सम्भवेऽपि'।

ख 'तयोर्व्याप्तिर्वैष्यत इति गन्धस्नेहयोः समवायेन व्याप्त्य सत्त्वेऽपि'।

ग 'व्याप्तिरित्यत एवेत्यर्थः'।

घ 'तदगर्भं क्षकारस्यातिव्याप्तिः'।

लक्षणस्यातिव्याप्तिः संयोगादिसामान्याभावस्य (१) प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वेन तदन्यत्वाभावादत आह- कर्मणि चेति। प्रतियोग्यसमानाधिकरण इति। तथाच प्रत्याश्रयमभावस्य (क)विभिन्नत्वे प्रतियोग्यधिकरणवृत्तिभिन्नरूपमेव प्रतियोग्यसमानाधिकरणत्वं हेतुमन्निष्ठाभावस्य विशेषणं वाच्यमन्यथा (२) तु प्रतियोग्यधिकरणवृत्तिताविशिष्टत्वलक्षणं तद्बोध्यम। अतः संयोगाभावस्य तादृशप्रतियोग्यसामानाधिकरण्यविशिष्टहेत्वधिकरणीभूतकर्मवृत्तित्वान्नोक्ता-(३) तिप्रसङ्ग इति भावः।

ननु प्रत्याश्रयमेकप्रतियोगिकस्याप्यभावस्य भेदः प्रागुक्तयुक्त्यैव निरस्तः प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य हेतोर्यदधिकरणं तद्वृत्त्यभावस्य लक्षणघटकत्वे। कपिसंयोगी तत्त्वादित्यादौ अव्याप्तिः। (४) कपिसंयोगादिमतोऽपि वृक्षस्य मूलाद्यवच्छेदेन तद्वद्भिन्नतया कपिसंयोगाद्यभावस्य स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टहेत्वधिकरणीभूतवृक्षवृत्तित्वादत आह- (ख)'यद्वे'ति।

---

१ प्रतियोग्यसामानाधिकरण्यविरहमुपपादयति--'प्रतियोग्यधिकरणीभूते'त्यादिना।

२ 'अन्यथे'ति। अधिकरणभेदेनाभावभेदानभ्युपगम इत्यर्थः।

३ 'नोक्तातिप्रसङ्ग' इति। संयोगी संयोगरहितत्वादित्याद्यव्याप्यवृत्तिसाध्यकव्यभिचारिणि हेतौ नातिव्याप्तिरित्यर्थः।

४ कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावस्य प्रतियोग्यसामानाधिकरण्यमुपपादयितुमाह—'कपिसंयोगादिमतोऽपी'ति।

---

क 'विनन्नत्वे'।

ख 'यत्त्विति।

प्रतियोगिवैयधिकरण्या(क)वच्छेदकेति। अत्र प्रतियोगिवैयधिकरण्यं प्रतियोग्यधिकरणवृत्तित्वानिरूपकत्वम्। तदवच्छेदकावच्छिन्नत्वं तदवच्छेदेन हेत्वधिकरणवृत्तित्वम्। (१) तेन संयोगी द्रव्यत्वादित्यादौ साध्याभावस्य प्रतियोगिसामानाधिकरण्याभावावच्छेदकीभूतकर्मादिवृत्तित्वेऽपि नाव्याप्तिरिति। तन्न। सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तस्यैव तदभावस्याप्यवच्छेदकाप्रसिद्धेः संयोगाद्यभावः कर्मादौ न संयोगादिसमानाधिकरण इत्यादिप्रत्ययानां संयोगाद्यभावे तद्भिन्न संयोगाद्यधिकरणवृत्तित्वनिरूपककर्मादिवृत्तित्वस्य संयोगाद्यनधिकरणीभूतकर्मादिवृत्तित्वस्य चावगाहित्वेनैव प्रामाण्योपपत्तेरिति वदन्ति।

ननु वृक्षादौ कपिसंयोगादिमत्त्वावच्छिन्नस्येव कपिसंयोगादिमद्वृत्तितानिरूपकत्वावच्छिन्नस्यापि भेदसत्त्वात् प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वविशेषणेऽप्ययं कपिसंयोगी तत्त्वादित्यादावव्याप्तेरेवेत्यत आह—न चेति। अन्योन्याभावस्य अन्योन्याभावमात्रस्य। अभेदस्येति। संयोगाद्यधिकरणवृत्तितानिरूपकत्वावच्छिन्नभेदस्यैव वृक्षादावबाधितप्रत्यभिज्ञानादित्यर्थः।

(२) यत्तु साधनवन्निष्ठान्योन्याभावगर्भलक्षणस्य कपिसंयोगी

---

१ प्रतियोगिवैयाधिकरण्यावच्छेदकेत्यादेः यथाश्रुतार्थं परित्यज्य व्याख्यानप्रयोजनमाह—'तेने'ति।

२ 'न चान्योन्याभावस्याव्याप्यवृत्तित्व'मिति मणिग्रन्थस्य अन्योन्याभावगर्भलक्षणस्य कपिसंयोगी तत्त्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिपरत्वेनाशङ्क्य 'अभेदस्य अबाधितप्रत्यभिज्ञाना'दिति

---

क न्यावच्छेदेन।

त्त्वादित्यादौ कपिसंयोगवत्त्वाद्यवच्छिन्नभेदमादाय प्रसक्ताऽव्याप्तिमुद्धरति—न चेत्यादिनेति। तत्तुच्छम्। मूलाग्रादिविभिन्नावच्छेदेन कपिसंयोगवत्त्वाद्यवच्छिन्नभेदाभेदयोरेकधर्मिणि सत्त्वसम्भवेनाभेदप्रत्यभिज्ञायास्तत्र भेदबाधकत्वासम्भवात् (क) प्रत्यक्षमणौ ग्रन्थकृतैव संयोगवद्भेदस्याव्याप्यवृत्तितायाः पूर्वमङ्गीकृतत्वेन तद्विरोधापातात् साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकवत्ताबुद्धेर्विरोधितावच्छेदकसम्बन्धेनैव तन्निरुक्तावन्योन्याभावस्य साधनवन्निष्ठताया वक्तव्यत्वेन कपिसंयोगवत्त्वाद्यवच्छिन्नभेदस्य निरवच्छिन्नविशेषणतारूपतादृशसम्बन्धेन साधनवन्निष्ठत्वाभावेन तादृशभेदमादाय कपिसंयोगादिसाध्यकसद्धेतावन्योन्याभावगर्भनिरुक्ताव्याप्तेः शङ्कितुमशक्यत्वाच्चेति दिक्।

ननु स्वसमानाधिकरणान्योन्याभावाप्रतियोगी यद्वान् यस्येति (ख) विग्रहे यत्पदार्थयोः साध्यसाधनयोर्व्याप्यव्यापकभाव एव षष्ठ्यर्थो इति पूर्वं (१) तस्योपस्थितौ तन्मात्रमेव सम्यगनुपस्थितौ (२) तद्गर्भप्रकृतलक्षणस्य ग्रहणं दोष इत्यत आह—व्याप्येति। अर्पीति (ग) अज्ञायमानस्यानन्तरं योज्यम्। तथाच (घ) व्याप्य-

---

मणिसन्दर्भेन शङ्किता व्याप्तिर्निराकृतेति दीधितिकृतां व्याख्यानं दूषयितुमाशङ्कते—'यत्त्वित्यादिना।

१ तस्येति। व्याप्यव्यापकभावस्येत्यर्थः।

२ अनुपस्थिताविति। व्याप्यव्यापकभावस्येत्यादिः।

---

क प्रत्यक्षमाना।

ख विग्रहो। ग ज्ञायमानस्य।

घ व्याप्यव्यापकभावत्वस्याज्ञाने।

व्यापकभावस्याज्ञाने 'तथात्वेन' तद्रूपेणा (क) ज्ञायमानस्यापि (ख) वस्तुसतो व्याप्यव्यापकभावस्य सम्बन्धत्वेनैव (ग) भातस्योपस्थितस्य षष्ठ्यर्थत्वमित्यर्थः। (१) न च विशिष्टधीजनकत्वगर्भस्य सम्बन्धत्वस्यापि जनकताघटकव्यापकत्वगर्भत्वादुक्तदोषतादवस्थ्यमिति वाच्यम्। (२ प्रकारत्वादेरेव सम्बन्धत्वस्यापि विशिष्टधीविषयता- (३) प्रभेदत्वेन घटितत्वात्। वस्तुतो यद्वान् यस्येत्यत्र साध्यवत्येव साधनस्य सम्बन्धोऽस्तीत्यर्थः। स चाधिकरणत्वमेव न तु व्याप्यव्यापकभाव इति द्रष्टव्यम्।

ननु यत्तद्गर्भव्याप्तीनामननुगतत्वादनुमितिसामान्यं प्रति प्रकारतया जनकतावच्छेदकत्वासम्भव इत्याशयेन शङ्कते—'न चे'ति। "एवं"—यत्तदादिगर्भत्वेऽ "अननुगमो" व्याप्तिनानात्वं समाधत्ते—'कस्ये'ति। कुत इत्यादिः। तथाच किं (घ) हेतुक-किं साध्यकानुमितेर्विषयविधया जनकतावच्छेदकः को धर्म इत्याकांक्षायामननु-

---

१ प्रकारताविशेष्यताशून्यविशिष्टधीजनकत्वं संसर्गत्वमित्यभिप्रायेणाशङ्कते—'न चे'ति।

२ प्रकारताविशेष्यताभिन्नविशिष्टधीविषयत्वं संसर्गत्वमित्याशयेन समाधत्ते—प्रकारत्वादेरेवेति।

३ 'प्रभेदत्वेने'ति। विशेषत्वेनेत्यर्थः।

---

क तद्रूपेण ज्ञायमानस्यापि।

ख वस्तुमतो।

ग भावस्यो०।

घ किं हेतुकोसाध्यका०।

गतस्यैव लक्षणत्वादित्यर्थः। (१) अवच्छिन्नसाध्यकानुमित्युपयुक्त-योरत्यन्तान्योन्याभावगर्भलक्षणयोर्वह्निमान् धूमादित्यत्राव्याप्तिमभि-प्रेत्य शङ्कते- अथेति।' क व्यासज्यवृत्तिप्रतियोगिकौ व्यासज्य-वृत्तिधर्मावच्छिन्नप्रतियोगिताकौ प्रतियोगितायाः प्रत्येक।२ पर्यवसित-त्वेन व्यासज्यवृत्तित्वायोगात्। प्रतियोगितावच्छेदकस्वरूपमेव प्रति-योगित्वमिति मतेन वा तथाभिधानम्। "एते"— साध्यतावच्छेदक-धर्मगर्भे (ख) कथं लक्षणे इत्यन्वयः। अत्यन्ताभावगर्भस्य वह्नित्वा-वच्छिन्नप्रकारतायां साधनवन्निष्ठतादृशोभयाभावप्रतियोगितावच्छेदकी-भूतवह्नित्वावच्छेद्यत्वेनान्योन्याभावगर्भस्य च सर्वस्यामेव (ग) वह्नि-मद्व्यक्तौ साधनवत्पर्वतादिप्रत्येकवन्निष्ठतादृशान्योन्याभावप्रतियोगि-त्वेन (३) द्वयोरेव लक्षणयोस्तत्राव्याप्तत्वादिति भावः। 'तादृशेति'। व्यासज्यवृत्तिधर्मावच्छिन्नाभावस्यानभ्युपगमादित्यर्थः। एवते वह्नि-

---

१ अवच्छिन्नेति। वह्न्यादिविशिष्टसाध्यकेत्यर्थः।

२ 'प्रत्येकपर्यवसितत्वेने'ति। प्रत्येकप्रतियोगिमात्रवृत्तित्वे-नेत्यर्थः।

३ 'द्वयोरेव लक्षणयो'रिति। अत्यन्ताभावान्योन्याभावगर्भयो लक्षणयोरित्यर्थः।

---

क व्यासज्यवृत्तिप्रतियोगिका।

ख तत्कथं।

ग वह्निमद्व्यक्ता। (क्रमशः)

14. **Nala-damayantiyam** (a new Drama) of M. M. Kalipada Tarkacharya. Rs. 4 ; (out of stock).

15. **Prashastapada-bhashyam**—Edited by M. M. Kalipada Tarkacharya. Rs. 8 ; Rs. 6 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 4 ; Rs. 3 (for members).

17. **Rik-pratishakhyam**—Edited by Dr. Pashupatinath Shastri M.A., B.L., Ph. D with the assistance of Prof. Chintaharaṇa Chakravarti, M.A. Rs. 10 ; (Out of stock).

18. **Prameyaratnavali** of Baladeva Vidyabhushana—by Prof. Akshayakumar Shastri, Rs. 5 ; Rs. 4 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Edited by Prof. Durgamohan Bhattacharya, M.A. Rs. 10 ; Rs. 8 (for members). (Out of stock).

20. **Bhasharatnam** of Kanada Tarkavagish—Edited by M. M. Kalipada Tarkacharya. Rs. 14 ; (Out of stock).

21. **Manodutam of Vishnudasa**—Edited by Prof Chintaharana Chakravarti, M.A. Rs. 3 ; Rs. 2·50 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of M. M. Kalipada Tarkacharya. Rs. 5 ; (Out of stock).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Edited by Pt. Janakinath Shastri. Rs. 2 ; Rs. 1.50 (for members).

24. **Sataranja Kutuhalam**—Edited by Prof. Chintaharana Chakravarti Kavyatirtha M.A. Rs. 3.

25. **Satyanubhavam** (a new Mahakavya) of M. M. Kalipada Tarkacharya, Rs. 10

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 3 ; Rs. 2·25 (for members).

27. **Manavaka-gauravam**—(Drama) by M. M. Kalipada Tarkacharya, Rs. 5·50 ; Rs. 5 (for members).

28. **Kapala Kundala**—(a drama based on Bankimchandra's Kapala Kundala) by Prof. Bishnupada Bhattacharya Rs. 3 and Rs. 2·25 P (for members).

29. **Brahmana-Sarvasva**—(A Pre-Sayana Vedic Commentary) of Halayudha, Edited by Prof. Durgamohan Bhattacharya. Rs. 40

Regd. No. C 329 Phone : 55-3119

30. **Natakaparibhasa of Singabhupala**—Edited by Prof. Dr. Kalikumar Datta Sastri. Rs. 7 ; (Rs. 6 for members).

31. **Daridra-Durdaivam**—(Prahasana) by Pt. Srijiva Nyāyatirtha, Rs. 6 ; (Rs. 5 for members).

32. **Aranyakavilasam**—(Khaṇḍakāvyam) by Pt. Jadavendranath Nyāyatarkatirtha, Rs. 6/-.

33. **Sardulasakatam**—(Prakaran) by Dr. Birendra Kumar Bhattacharyya, Rs. 6 : Rs. 5·00 for members.

34. **Vestana Vyayoga**—(Prahasana) by Dr. Birendra Kumar Bhattacharya, Rs. 4 : Rs. 3.50 for members.

35. **Ekaḷavya-Gurudashinam**—(a Nataka) by Pt. Durga Prasanna Vidyabhusan, Rs. 6 ; Rs. 5·00 (for members).

36. **Mandakranta Vrittam**—(a Khanda kavya) by Mahamohopadhyaya Dr. Kalipada Tarkacharyya, Rs. 10

37. **Dharitripati Nirvachanam**—(Prahasana) by "Buroda", Rs.4 ; Rs. 3

38. **Bhṛngadūtam**—(a dūtakāvya) of Paramānanda ed. by Prof. Dr. Gopikamohan Bhattacharya, Rs. 5 (Rs. 4 for members).

39. **Atha Kim**—(Satire) by "Buroda", Rs. 4·50 Rs. 3·50

**BRĀHMANA-SARVASVA**

**(A Pre- Sāyaṇa Vedic Commentary)**

***By***

**HALĀYUDHA**

**EDITED WITH INTRODUCTION, CRITICAL NOTE INDICES & APPENDICES**

***By***

**PROF. DURGAMOHAN BHATTACHARYYA**

***Price Rs.* 40 /-**

***Available at—***

**SANSKRIT SAHITYA PARISHAT**
**Calcutta—4.**

Printed by Shyamapada Bhattacharya, B
Sanskrit Sahitya Parishat, at Arunima Pr
Simla Street Calcutta—6 and published b
Sanskrit Sahitya Parishat, 168/1, Raja
Calcutta—4.



64